अयं च तस्यापरो लाभस्त्वत्सङ्गमात् प्र(भृ)ति यावत् त्वत्सङ्गमनमनुवर्तमानस्त्वया तेन चाऽचिन्तितपूर्वो भविष्यति, अहो सत्सङ्गमस्य महिमेत्याह— छन्नोपान्त इति –

छन्नोपान्तः परिणतफलद्योतिभिः काननाम्रै-
स्त्वय्यारूढे शिखरमचलः सर्पवेणीसवर्णे[1]।
नूनं यास्यत्यमरमिथुनप्रेक्षणीयामवस्थां
मध्ये श्यामः स्तन इव भुवः शेषविस्तारपाण्डुः ॥ १८ ॥

परिणतफलद्योतिभिः पक्वैः फलैः शोभमाना ये तैः काननाम्रैः छन्नोपान्तः प्रावृतपर्यन्तः सन् अचलः सर्पवेणीसवर्णे मेचकरुचौ त्वयि शिखरमारूढे नूनममरमिथुनप्रेक्षणीयां अवस्थां यास्यति । कस्तदाऽमरमिथुनप्रेक्षणीयत्वावकाशोऽत आह— मध्ये श्यामः शेषविस्तारपाण्डुरिति । किमत आह— भुवः स्तन इवेति । तादृशे बृहति स्तने स्त्रीपुंसयोर्द्वयोरप्यभिलाषो भवतीति मिथुनपदं प्रयुक्तम् । महीतलवासिना-(वस्मा ?)मस्मादाधिकं प्रयोजनं किञ्चिदस्ति इति द्योतयितुममरपदविशेषणं कृतम् । सर्पवेणीशब्दे वेणशिब्दः केशसंकुचितरूपे मुख्यवृत्तिः, सर्पसंकुचितरूपं सादृश्याद्वदति । सङ्कोचश्च वृत्ताकार एव भवति सर्पाणाम् । अतो वेष्टितविग्रहेण सर्पेण समानवर्णत्यर्थः सिद्धो भवति ॥ १८ ॥

अथ मालदेशे गिरौ च कृतयातिवृष्ट्या विच्छिन्नतोयस्यास्य नदीपर्वतान्तराले तोयार्थिजनदृश्यत्वं मा भूदिति मत्वा शीघ्रगत्या तद्देशातिक्रमणं विदधाति — स्थित्वेति.—

स्थित्वा[2] तस्मिन् वनचरवधूभुक्तकुञ्जे मुहूर्तं
तोयोत्सर्गात्[3] द्रुततरगतिस्तत्परं वर्त्म तीर्णः ।
रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णां
भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य ॥ १९ ॥

वनचरेति । अनेन म्लेच्छजनाश्रयसम्भूतस्स गिरिः, अतस्तत्रत्यवनवृत्तान्तदिदृक्षया न दृष्टिर्देयेत्युच्यते । अत एवाह मुहूर्तमिति । यावता श्रमापगमस्तावदेव स्थातव्यमित्यर्थः । तोयोत्सर्गादिति पञ्चम्यन्तः पाठः । तोयोत्सर्गाद्धेतोः द्रुततरगतिर्भूत्वा तत्परं वर्त्म तीर्णः सन् विन्ध्यपादे विशीर्णां रेवां द्रक्ष्यसीत्यस्मिन्

१. All other com. except Dk. and Ps. read स्निग्धवेणीसवर्णे ।
२. Jn. तस्मिन् स्थित्वा ।
३. Dk. Jn. Ml. Ps. Vl. तोयोत्सर्गद्रुत० ।

वाक्ये तीर्णपदं यावत् तोयोत्सर्गादिति पदमनुसृतमिति मन्तव्यम् । कश्चित्तु 'तोयोत्सर्गेण कृतेन गलितगौरवतया शीघ्रतरगमनः' इति तोयोत्सर्गस्य द्रुततरगतिसिद्धिमेव प्रयोजनमभिहितवान् । तदयुक्तम् । 'अद्रेः शृङ्गं' इत्यत्र तोयपूर्णस्यापि स्वरूपाच्छादनक्षमवेगसम्पादनशक्तेरुक्तत्वात् । किञ्च अनन्त(र)भावितोयादानविधिविरुद्धं चैतद्व्याख्यानम् । तथाहि पूर्वमुभयत्र वृष्टिं विहितवता यक्षेण स्वेनैव कारितस्य तोयोत्सर्गस्यानेन श्लोकेन द्रुततरगतिलाभे प्रयोजने कथिते सत्युत्तरश्लोके द्रुतत्वविरुद्धं तोयादानविधानं न घटते । न च वाच्यं तोयमादायेति । तोयादानं प्रत्यनुमतिरेवात्र क्रियते न विधिरिति, विध्यभावे'ऽन्तस्सार'मित्यादानप्रशंसानन्वयप्रसङ्गात् । तस्माद्वदान्यताप्रसिद्धिभङ्गापादकं रिक्तावस्थायामर्थिनः दृश्यत्वं परिहर्तुं द्रुतगत्यादिविशिष्टनदीप्राप्तिविधानमेवैतत् , न तु शीघ्रतरगतिविधानमात्रपरम् इति । द्रक्ष्यसीत्यनेन दर्शनीयतरत्वं तस्याः सूचयति । कीदृशं तस्या दर्शनीयतरत्वमत आह— **उपलविषमे विन्ध्यपादे विशीर्णाम्** । 'पादाः पर्यन्तपर्वताः' इत्यमरः । उक्तरूपानुरूपमुत्प्रेक्षते— **भक्तिच्छेदैरिति** ॥ १९ ॥

**तस्यास्तिक्तैर्मदगजमदैर्वासितं वान्तवृष्टि-**
**र्जम्बूकुञ्जप्रतिहतरयं तोयमादाय गच्छेः ।**
**अन्तःसारं घन ! तुलयितुं नानिलः शक्ष्यति त्वां**
**रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ॥ २० ॥**

**तस्या इति । तिक्तैः** सुगन्धिभिः ।

'कटुतिक्तकषायास्तु सौरभ्येऽपि प्रकीर्तिताः ।'

**इत्यमरः** । **मदैः** मदजलैः **वासितं** आमोदितं, अनेन करिमज्जनाय पर्याप्ततोया सा नदीत्यपि सिध्यति । **वान्तवृष्टिः** निश्शेषिततोयः । अनेन बह्वादेयमिति विवक्षितम् । प्रतिहतरयत्वेनादानसौकर्यं वदति— आदायेति, यथाशक्ति इति शेषः । अत एवाह—अन्तःसारं त्वां तुलयितुं न शक्ष्यतीति । गच्छेरिति । 'द्रुततरगतिः' इत्यत्रोक्तरयार्थो नातः परमनुष्ठेयः । नित्याभ्यस्तं गतिमात्रमेव कर्तव्यमिति भावः । आदानं विहितं प्रशंसति — अन्तःसारमिति । स्वाभ्यन्तरप्रदेशे तोयाख्यनिजधनपूर्णम् ।

'सारो बले स्थिरांशेऽर्थे पुमान् न्याय्ये वरेऽर्थवत् ।'

इति **वैजयन्ती** । **तुलयितुं** तोलनं कृत्वा लघुरयमित्यवज्ञां कर्तुमित्यर्थः । **अनिल** इति । स हि तोलनप्रियस्त्वत्समानदेशश्च, अतस्तस्यावज्ञा अवश्यपरिहर्तव्येत्युच्यते

न शक्ष्यतीति । अनेन प्राप्तिपूर्वकत्वात् प्रतिषेधस्य सोऽनिलस्त्वच्चोलने स्वशक्तिमाखिलां विनियोक्ष्यति, अकृतार्थश्च भविष्यति, स्वयमेवाशक्तोऽशक्यारम्भी चेत्यवज्ञातश्च भविष्यतीति विवक्षितम् । शक्ष्यतीत्यत्र कारणमाह — रिक्त इति द्रव्यहीन इत्यर्थः । सर्व इति गुणान्तरपरिपूर्णोऽपि इति विवक्षितम् । पूर्णता गौरवायेत्यत्र सर्वस्यापीति षष्ठ्यन्ततया विपरीतः सर्वशब्दोऽनुषक्तव्यः । गुणान्तरहीनोऽपीत्यर्थः । हिशब्दो हेतौ । यस्मादेवं रिक्तत्वपूर्णत्वयोर्लघुत्वगुरुत्वव्याप्तिर्लोके दृश्यते तस्मादन्तस्सारं तोयपूर्णं त्वां तुलयितुं न शक्ष्यतीत्यर्थः । अत्र —

"कृतशुद्धेः क्रमात् पीततोयादेः पथ्यभोजिनः ।
वातादिभिर्न बाधा स्यादिन्द्रियैरिव योगिनः ॥"

इत्यायुश्शास्त्रोक्तार्थसमाधिरनुसन्धातव्यः । वान्तवृष्टिरित्यत्र शुद्धित्रयसमाधिः । तोयमादायेति पेयादिक्रमसमाधिः । तोयविशेषणाभ्यां दोषेषु बहुलता उपशामकैः दोषाविरोधिभिश्चौषधैः संस्कृतत्वं पेयादीनां व्यज्यते । अन्तस्सार इति तैलघृतमधु-संस्कृतात्मानमित्यावेदयति । अनिलस्तुलयितुं न शक्ष्यतीत्यनेन दोषत्रयमेवमभि-भवितुं (न) शक्ष्यतीति प्रतीतिः स्यात् ॥ २० ॥

अतःपरं विन्ध्याटवीप्रवेशाः । तत्रत्यास्तिर्यञ्चस्त्वद्दत्तसलिलसेकोत्पन्नतृणकुसु-माद्युपयुज्यमानाः पथिकानां सूचयन्तश्च मुखेभ्यस्त्वत्प्रशंसावचसां प्रवर्तका भविष्यन्ती-त्यस्माद्धेतोस्तेष्वपि वर्षः कर्तव्य एवेत्याह — नीपमिति —

नीपं दृष्ट्वा हरितकपिशं केसरैरर्धरूढै-
राविर्भूतप्रथममुकुलाः कन्दलीश्चानुकच्छम् ।
दग्धारण्येष्वधिकसुरभिं गन्धमाघ्राय चोर्व्याः
सारङ्गास्ते जललवमुचः सूचयिष्यन्ति मार्गम् ॥ २१ ॥

सारङ्गशब्दवाच्याः षट्पदहरिणगजा यथाक्रमं नीपं कन्दलीश्च दृष्ट्वोर्वीगन्धं चाघ्राय जललवमुचस्ते मार्गं पथिकानां सूचयिष्यन्ति सूचयन्तः प्रशंसावाचः-प्रवर्तका भविष्यन्तीति वाक्यार्थः । लवपदेनातिव्ययो निषिध्यते । अनुकच्छमिति कदम्बकन्दलीस्थानमुक्तम् । दग्धारण्येष्वित्युर्वीगन्धस्थानमिति विवेकः । अर्धरूढैः केसरैर्हरितकपिशं असमग्रोत्पन्नैर्दलैः श्यामरक्तम् । अनेनाविर्भूतप्रथममुकुला इति कन्दलीविशेषणेन च तदुपजीविनामार्त्यतिशयकृतस्त्वरातिशयो ध्वन्यते । यद्यपि —

1. Dk. Ml. St. जग्धारण्येषु ।

'सारङ्गः शबलो वर्णश्चातकः षट्पदो मृगः।'

इत्यत्र सारङ्गशब्दस्य गजवाचित्वं न दृष्टं तथापि 'त्वन्निष्यन्दोच्छ्वसिते'ति 'करीव सिक्त'मिति च गजानां जलसिक्तमहीगन्धप्रियत्वं वदता कविनात्राप्युर्वीगन्धाघ्राणनेन गजा एव सारङ्गशब्देनोक्ता इति मन्तव्यम्। न चाभिधानग्रन्थविरोधोऽप्यस्ति। तत्कर्तृणां लोकैकप्रमाणकानामर्थेयत्ताविवक्षाभावात्॥ २१॥

अतः प्रतिपर्वतं विश्रमं कुर्वतोऽस्य तत्र तत्र कमपि कालक्षेपं सपदि बुद्धाबुपागतं यथाशक्ति परिहरणीयोऽयं विलम्ब इति बुद्धिमुत्पादयितुं कथयति— उत्पश्यामीति—

उत्पश्यामि द्रुतमपि सखे! मत्प्रियार्थं यियासोः
कालक्षेपं ककुभसुरभौ पर्वते पर्वते ते।
शुक्लापाङ्गैः सजलनयनैः स्वागतीकृत्य केकाः
प्रत्युद्यातः कथमपि भवान् गन्तुमाशु व्यवस्येत्॥ २२॥

ते पर्वते पर्वते कमपि कालक्षेपमुत्पश्यामि निरूपयामि। नैतत् त्वय्यविश्वासाद् अस्माभिरुच्यत इत्याह— मत्प्रियार्थं द्रुततरं यियासोरपीति। कोऽयं कालक्षेपस्सम्भावितस्तमाह— शुक्लापाङ्गैः तत्तत्पर्वतस्थैः मयूरैः हर्षात् सजलनयनैः केकाः स्वागतीकृत्य केकाशब्दान् स्वागतशब्दस्थाने कृत्वा प्रत्युद्यातः अभ्युद्गतः। सजलनयनैरित्यादिना मनोवाक्कर्मभिः सम्भावना दर्शिता। एवम्भूतैः सुहृद्भिः सह ककुभैरर्जुनैः सुरभिते देशे विश्रम्य परस्परवार्ताश्रवणकथनप्रवृत्तो भवान् कथमिवाशु गन्तुं व्यवस्येत्, अवश्यं भवेदेवं कालक्षेप इत्यर्थः। एतादृशेषु विलम्बेषु प्रियसुहृत् खलु भवान् अस्माकमित्ययमेवाश्रय इत्याह— सखे! इति॥ २२॥

अतीतविन्ध्यस्य तव दशार्णाख्या जनपदा भविष्यन्तीत्याह— पाण्डुच्छायेति—

पाण्डुच्छायोपवनवृतयः केतकैः सूचिभिन्नै-
र्नीडारम्भैर्गृहबलिभुजामाकुलग्रामचैत्याः।
त्वय्यासन्ने परिणतफलश्यामजम्बूवनान्ताः
सम्पत्स्यन्ते कतिपयदिनस्थायिहंसा दशार्णाः॥ २३॥

त्वय्यासन्न इत्येतत् दशार्णविशेषणानां हेतुभूतमादौ कर्तव्यम्। जललवमोक्तरि त्वयि समागत इत्यर्थः। सूचिभिन्नैः सूच्याकारेष्वग्रेषु विकसितैः नीडं

पक्षिगृहं गृहबलिभुजश्चटकाख्याः पक्षिविशेषाः, 'गृहबलिभुक् नीलकण्ठश्च' इति चटकाभिधाने हलायुधः । हंसानां जम्बुप्रियत्वात् कतिपयदिनावस्थानमुक्तम् । अनेन तद्देशस्था हंसा भवतः प्रास्थानिकगर्जनस्य श्रवणादेव न गच्छेयुः । त्वयि तद्देशं गतवति त्वया सहैव गच्छेयुरिति सहायाधिक्यसम्पत्तिरुच्यते ॥ २३ ॥

तेषां दिक्षु प्रथितविदिशालक्षणां राजधानीं
गत्वा सद्यः फलमतिमहत्[1] कामुकत्वस्य लब्धा ।
तीरोपान्तस्तनितसुभगं पास्यसि स्वादु यत् तत्[2]
सभ्रूभङ्गं मुखमिव पयो वेत्रवत्याश्चलोर्म्याः[3] ॥ २४ ॥

तेषामिति । राजधानीमिति सम्बन्धः । लक्षणशब्दो नामपर्यायः । सद्य इति अतिमहतः फलस्य सद्यो लाभे महत्खलु सुखमिति भावः । लब्धा लप्स्यत इति कर्मणि लुटि रूपम् । लप्स्यमानं फलं दर्शयति — तीरेति । यद्यस्माद्वेत्रवत्या नद्यास्तत्पयोमुखं पास्यसि । मुखं विशिनष्टि—तीरोपान्तस्तनितसुभगं सभ्रूभङ्गं स्वाद्विति च । स्तनितशब्देन सीत्कार उक्तः । इव शब्दः एवकारार्थः । पास्यस्येवेत्यन्वयः । चलोर्म्या इति विशेषणं सभ्रूभङ्गत्वं वक्तुमुक्तम् ॥ २४ ॥

नीचैराख्यं गिरिमधिवसेस्तत्र विश्रामहेतो-
स्त्वत्सम्पर्कात् पुलकितमिव[4] प्रौढपुष्पैः कदम्बैः ।
यः पण्यस्त्रीरतिपरिमलोद्गारिभिर्नागराणा-
मुद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि ॥ २५ ॥

विश्रामहेतोः विश्रमार्थम् । न चास्य त्वय्यनादरः शङ्कितव्य इत्याह — त्वत्सम्पर्कादिति । इवशब्द एवकारार्थे । नायमाम्रकूटवन्म्लेच्छजनाश्रयो गिरिः, अतस्तत्रत्यजनवृत्तान्तदिदृक्षया दृष्टिदानं कार्यमेवेति द्योतयन् विशिनष्टि— य इति । अत्रत्यानां नागराणां यौवनान्युद्दामानीति यो वेश्यारतिपरिमलमुद्गिरद्भिः शिलावेश्मभिः लोके प्रथयति । पथिकजनद्वारा लोकप्रसिद्धः ॥ २५ ॥

---

१. Jn. फलमपि महत्; all other com. except Ps. read फलमविकलम् ।

२. Jn. स्वादु यत्र; Vl. Vs. स्वादुयुक्तम् ।

३. Ml. Vl. Vs. चलोर्मि ।

४. Ps. पुलकितमिवाप्रौढपुष्पैः ।

विश्रान्तः सन् व्रज वननदीतीरजानां[1] निषिञ्च-
न्नुद्यानानां नवजलकणैर्यूथिकाजालकानि[2] ।
गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानां
छायादानात् क्षणपरिचितः पुष्पलावीमुखानाम् ॥ २६ ॥

एवं रम्यतरेऽपि गिरौ नातिविलम्बः कार्यः इत्यनेनोच्यते । अनेनासन्नसेचकत्व-मुक्तम् । यूथिकाशब्दस्सकलपुष्पलतोपलक्षणम् । नवजलकणैरिति वदता यावता तासां तापशान्तिर्भवति तावानेव सलिलव्ययः कर्तव्य इत्युक्तमित्यर्थः । एवं व्रजता त्वया यस्तत्र वनक्रीडाप्रवृत्तवनिताकटाक्षलक्षभावश्शक्यसम्पादस्सोऽपि तत्प्रीतिकरेण व्यापा-रेण सम्पादनीय एवेत्युत्तरार्धेनोच्यते । क्रमशब्दस्य नित्यसापेक्षत्वात्समासः । अथवा रुजेत्यपि 'वष्टि भागुरिः' इति टाबन्तत्वाद् वृत्तिस्थमेव भवतु । अनेन तासां छायाश्रद्धा दर्शिता । छायादानात् क्षणपरिचित इति । असौ बुद्धिपूर्वमेव छायां ददाति न च गत्यनुनिष्पन्नैवेयं छायेति यथा ताः स्त्रियो मन्वीरन् तथा तरणिकिरणसरणिं निरुध्य क्षणं क्षणमवस्थाय तन्मनश्चक्षुषां चाटूक्तीनां च विषयो भव इत्यर्थः । आत-पदुःखस्य छायासुखस्य च मुखे सद्योऽभिव्यक्तिर्भवति इति मुखपदं निक्षिप्तम् । यूथिकाजालकानि निषिञ्चन् पुष्पफललवनं कुर्वतीनां स्त्रीणां मुखानां क्षणपरिचि-तस्सन् व्रजेति वाक्यार्थः ॥ २६ ॥

अथ दिगन्तरस्थोज्जयिनीमार्गमुपदेष्टुमुपक्रमते — वक्र इति —

वक्रः पन्थास्तव भवतु च[3] प्रस्थितस्योत्तराशां
सौधोत्सङ्गप्रणयविमुखो मा च भूरुज्जयिन्याः[4] ।
विद्युद्दामस्फुरितचकितैस्तत्र पौराङ्गनानां
लोलापाङ्गैर्यदि न रमसे लोचनैर्वञ्चितः स्याः[5] ॥ २७ ॥

उत्तराशां प्रस्थितस्य तवोज्जयिनीगमने वक्रः पन्थाः स्यात् । तथ भवतु, उज्जयिनीसौधोत्सङ्गप्रणयविमुखश्च मा भूः । तत्र त्वं श्रद्धालुरेव स्याः' इत्यर्थः ।

---

१. Sv. Vl. नगनदी; Ms. Sd. नवनदी ।

२. Ml. Vs. तीरजातानि सिञ्चन् ।

३. All other com. except Dk. and Ps. read यद्यपि भवतः for तव भवतु च ।

४. All other com. except Dk. and Jn. read मा स्म भूः ।

५. All other com. except Dk. and Vl. read वञ्चितोऽसि ।

किं तर्हि तद्गमनयत्नस्य फलं, तदाह — विद्युद्दामेति । विद्युद्दाम्नः स्फुरणेन चकितानि कृत्वेत्यर्थः । वञ्चितः स्याः इति व्यर्थोत्पत्तिः स्या इति ॥ २७ ॥

कस्तर्हि तं गामी मार्ग इत्यत आह — वीचीति—

वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः
संसर्पन्त्याः स्खलितसुभगं दर्शितावर्तनाभेः ।
निर्विन्ध्यायाः पथि भव रसाभ्यन्तरः[1] संनिपत्य
स्त्रीणामाद्यं प्रणयवचनं[2] विभ्रमो हि प्रियेषु ॥ २८ ॥

वीचिक्षोभेण स्तनिता शब्दं कुर्वती विहगश्रेणिरेव काञ्चीगुणो यस्याः । त्वद्गतमनस्कतया मार्गवर्तिषूपलादिषु सम्भूतेन स्खलितेन सुभगमनुरागद्योतकत्वान्मनोहरं यथा भवति तथा संसर्पन्त्याः । दर्शितावर्तनाभेरित्यपि कर्मधारयपूर्वो बहुव्रीहिः । एवंभूतायाः निर्विन्ध्याया रसाभ्यन्तरो भव । निर्विन्ध्यासम्भोगरस आभ्यन्तरे आत्मनि यस्य इत्येको निर्विन्ध्योदकमाभ्यन्तरे इत्यपरः । पथीत्ययत्नलभ्यत्वं वदति । संनिपत्य त्वमेव तामुपेत्य । ननु प्रणयसूचकवाङ्मिश्रणरहितायां तस्यां कुतः सम्भोगप्रसक्तिरित्यत आह — स्त्रीणामिति । आद्यं श्रेष्ठं रसावहमिति यावत् । प्रणयवचनं प्रणयद्योतकवाङ्मिश्रणं विभ्रम एव, न तात्वादिव्यापारः । हिशब्दोऽस्मिन्नर्थे रहसि विजनविवादं द्योतयति ॥ २८ ॥

अथ सिन्धुर्नाम नदी भविष्यति । सापि त्वया सम्भावनीयैवेत्याह—वेणीति—

वेणीभूतप्रतनुसलिला[3] तामतीतस्य सिन्धुः
पाण्डुच्छाया तटरुहतरुभ्रंशिभिर्शीर्णपर्णैः[4] ।
सौभाग्यं ते सुभग! विरहावस्थया व्यञ्जयन्ती
कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥ २९ ॥

तामतीतस्य निर्विध्यामतिक्रान्तस्य वेणीभूतं वेणीकृतं प्रतनु अत्यल्पं सलिलं यस्याः सा इति प्रथमान्तः पाठः । तटरुहेभ्यस्तेभ्यो भ्रष्टैः शीर्णैः पक्वैः पर्णैः पाण्डुच्छाया

१. Ms. Sd. Vs. रसाभ्यन्तरम् ।
२. Sd. प्रणयि वचनम् ।
३. Dk. St. ०सलिला सा त्वतीतस्य; Ml. ०सलिलासावतीतस्य ।
४. All other com. read जीर्णै for शीर्णै ।

सिन्धुसंज्ञा नदी भविष्यतीति शेषः । अनया त्वद्विरहसम्भूतयावस्थया ते सौभाग्यं लोके व्यञ्जयन्ती सा कार्श्यं पाण्डुत्वं च येन विधिना त्यजति स त्वयैवोपपाद्यः । न तस्या वाङ्मिश्रणं प्रतीक्षितव्यमित्येवकारार्थः ॥ २९ ॥

अतःपरमवन्तिविषयाः, तत्र खलु त्वत्प्राप्यो देश इत्याह — प्राप्येति —

प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धान्
पूर्वोद्दिष्टामनुसर[1] पुरीं श्रीविशालां विशालाम् ।
स्वल्पीभूते सुचरितफले स्वर्गिणां गां गतानां
शेषैः पुण्यैर्हृतमिव[2] दिवः कान्तिमत्खण्डमेकम् ॥ ३० ॥

(उदयनेति ।) उदयनो वत्सराजः । तत्र (अवन्त्यां) वृद्धा अपि रसिका एवेत्यनेनोच्यते । पूर्वोद्दिष्टां 'मा च भूरुज्जयिन्याः' इत्यत्रोक्तामुज्जयिनीं विशालां विशालापरपर्यायां श्रीविशालां श्रीमतीम् । श्रीमत्त्वमुक्तं विवृणोति — स्वल्पीभूत इति । रचितानां विश्वजिदादीनां स्वर्गाख्ये फले स्वल्पीभूते भुक्तप्राये तत्र पूर्ववदवस्थानाशक्त्या भुवङ्गतानां शेषैः पुण्यैः तेषामेवादत्तफलैरंशैर्निमित्तभूतैः तत्फलोपभोगार्थमिति यावत् । कृतं धात्रा अकल्पितं दिवः खण्डमिवास्यार्थस्यानागमितत्वदोषं परिहरन्नाह— इव इति । अरमणीयतायां तु न कियानपि भोग इत्याह — कान्तिमदिति ॥ ३० ॥

अनेन स्वर्गौपम्यकथनेन दुःखासम्भिन्नं तत्र सुखमित्युक्तम्, तदेव क्वचिद्विषये दर्शयति — दीर्घीकुर्वन्निति —

दीर्घीकुर्वन् पटुमदकलं कूजितं सारसानां
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ।
यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः
सिप्रावातः[3] प्रियतम इव प्रार्थनाचाटुकारः ॥ ३१ ॥

यत्र स्त्रीणां सुरतग्लानिं प्रत्यूषेषु सिप्रानदीसम्भूतो वातो हरतीत्यन्वयः । पटुना प्रचुरेण मकरन्दास्वादभुवा मदेन कलं सारसानां कूजितं दीर्घीकुर्वन् अविरतं श्रावयन् । स्फुटितेति । विकसितपङ्कजानामामोदसम्पर्कसुरभिः अङ्गानुकूलः सुखस्पर्शः ।

---

१. Jn. Ps. उपसर for अनुसर ।
२. Jn. Ms. Ps. कृतमिव for हृतमिव ।
३. Ml. Ps. Vs. शिप्रावातः ।

एभिर्विशेषणैः श्रोत्रघ्राणत्वचां प्रीतिकरत्वमुक्तम् । प्रार्थनाचाटुकारः प्रियतम इवेति । प्रियतमो हि सुरतक्लान्तायां कान्तायां सत्यां चाटूक्तिभिः तस्या रागमुत्पादयतीति प्रसिद्धमेव ॥ ३१ ॥

अथ 'सौधोत्सङ्गप्रणयविमुखो मा भूः' इत्यनेन रमणीयतामस्तुतेषु हर्म्येषु मार्गश्रममपनीय भुक्तिमुक्तिसाधनं महाकालाख्यं महादेवपुरं गच्छेरित्याह — जालोद्गीर्णैरिति द्वाभ्याम् —

जालोद्गीर्णैरुपचितवपुः केशसंस्कारधूपै-[1]
बन्धुप्रीत्या भवनशिखिभिर्दत्तनृत्योपहारः[2] ।
हर्म्येष्वस्याः कुसुमसुरभिष्वध्वखिन्नान्तरात्मा[3]
खेदं नीत्वा[4] ललितवनितापादरागाङ्कितेषु ॥ ३२ ॥

भर्तुः कण्ठच्छविरिति गणैः सादरं वीक्ष्यमाणः
पुण्यं यायास्त्रिभुवनगुरोर्धाम चण्डेश्वरस्य ।
धूतोद्यानं कुवलयरजोगन्धिभिर्गन्धवत्या-
स्तोयक्रीडाविरतयुवतिस्नानतिक्तैर्मरुद्भिः ॥ ३३ ॥

अध्वखिन्नान्तरात्मा अस्याः हर्म्येषु खेदं नीत्वा चण्डेश्वरस्य अम्बिकापतेर्धाम भवनं यायाः इति सम्बन्धः । जालोद्गीर्णैः गवाक्षनिष्क्रान्तैः केशकलापं संस्कर्तुं कल्पितैः धूपैः, 'धूपोऽसौ गन्धवासितः' इति वैजयन्ती । उपचितवपुः वर्धितशोभम् । अनेन गिरिशिखरनिवासादभ्यधिकगुणोऽस्या हर्म्येषु निवास इत्युच्यते । गिरिलभ्यं सुहृत्समागमसुखमप्यस्त्येवेत्याह — बन्धुप्रीत्येति । 'ककुभसुरभौ' इत्युक्तं गिरिगुणं हर्म्याणां दर्शयति कुसुमसुरभिष्वित्यनेन । भर्तुः कण्ठच्छविरिति निरूप्य भगवदनुचरैः भूतगणैः सादरं दृश्यमानः । पुण्यं पापहरं श्रेयस्साधनं च । त्रिभुवनगुरोः त्रिलोकीस्वामिनः सृष्टिस्थितिसंहारकर्तुरिति यावत् । पुण्यत्वेन विशेषितं धाम रमणीयत्वेनापि विशिनष्टि — धूतोद्यानमिति । अनेन जलकुसुमानामुद्यानकुसुमानां युवत्यङ्गरागाणां च परिमलवाहिना वायुना हर्षितविश्वजनमित्युक्तं भवति ॥ ३२-३३ ॥

---

१. Sv. धूमैः for धूपैः ।

२. Dk. Jn. ०नृत्तोपहारः ।

३. Dk. Ml. अध्वखेदं नयेथाः for अध्वखिन्नान्तरात्मा ।

४. Dk. पश्यन् लक्ष्मीं, Ml. लक्ष्मीं पश्यन् for खेदं नीत्वा ।

पूर्वश्लोके पूर्वोत्तरार्धाभ्यां धाम्नः पुण्यत्वं रमणीयत्वं चोक्तम् । तत्र पूर्वार्धानुरोधेन श्रेयस्सम्पादनप्रकारं तावदाह — अप्यन्यस्मिन्निति —

अप्यन्यास्मिन् जलधर! महाकालमासाद्य काले
स्थातव्यं ते नयनविषयं यावदत्येति भानुः[1] ।
कुर्वन् संध्याबलिपटहतां शूलिनः श्लाघनीया-
मामन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम् ॥ ३४ ॥

अन्यस्मिन् काले महाकालमासाद्यापीति । यद्यन्यस्मिन् काले गतिवशात् प्राप्तिः स्यात् तथापीत्यर्थः । ते त्वया तावत् स्थातव्यं प्रतिपालयितव्यं यावद्भानुर्नयनविषयमत्येति । किं मया लभ्यते तदाह—कुर्वन्निति । शूलिनः सन्ध्याबलिपटहतां कुर्वन् आमन्द्राणां गम्भीरतराणां गर्जितानां फलं तत्सद्भावप्रयोजनमविकलं समग्रं लप्स्यसे सायंसन्ध्याबलिसेवा महाफलेति शैवागमप्रसिद्धिः । तां दर्शयति — श्लाघनीयामिति ॥ ३४ ॥

उत्तरार्धानुरोधेन सुखसम्पादनप्रकारमप्याह— पादन्यासेति—

पादन्यासक्वणितरशनास्तत्र लीलावधूतैः
रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः ।
वेश्यास्त्वत्तो नखपदसुखान् प्राप्य वर्षाग्रबिन्दून्
आमोक्ष्यन्ति त्वयि मधुकरश्रेणिदीर्घान् कटाक्षान् ॥ ३५ ॥

तत्र सन्ध्याबलिकाले महाकालनाथपरिचारिका वेश्या नवेषु नखपदेषु सुखस्पर्शान् वर्षप्रथमबिन्दून् त्वत्तः प्राप्य त्वयि कटाक्षान् आमोक्ष्यन्ति । वर्षबिन्दून् वेश्यां प्रापय्य तत्कटाक्षविषयत्वं सम्पादयितव्यमित्यर्थः । पादन्यासेन प्रदक्षिणक्रियार्थेन क्वणितरशना वाचालमेखलाः, कारणसाम्यान्नूपुरक्वणनमपि सिध्यति । लीलावधूतैश्चामरैः क्लान्तहस्ता इति । अनेन तासां लघुद्रव्यसाधनयापि लीलया क्लमो भवतीति ललितत्वातिशय उच्यते । वलयकङ्कणक्वणनमपि सिध्येत् । रत्नच्छायया खचिता रूषिता वलयः शिल्परेखा येषां तैः । भूषणक्वणनकथनेन क्लमकथनेन च रतिसमाधिः स्फुरति इति ॥ ३५ ॥

अथ शरीरेणैव स्वेन भगवदाराधनप्रकारमाह— पश्चादिति—

1. Ms· Sd· Sv. Vl· अभ्येति for अत्येति ।

पश्चादुच्चैर्भुजतरुवनं मण्डलेनाभिलीनः
सान्ध्यं तेजः प्रतिनवजपापुष्परक्तं दधानः ।
नृत्तारम्भे हर पशुपतेरार्द्रनागाजिनेच्छां
शान्तोद्वेगः स्तिमितनयनं दृष्टभक्तिर्भवान्या ॥ ३६ ॥

पश्चात् सन्ध्योत्सवानन्तरं पशुपतेर्नृत्तारम्भे सन्ध्यारागरूषितस्त्वं मण्डलेन वर्तुलेनाकारेण तस्य उच्चैरुन्नतं भुजतरुवनमभिलीनः अवतीर्णो भूत्वा आर्द्रनागाजिनेच्छां हर पूरय इति वाक्यार्थः । एवं कृते भवानी च परितुष्टा भवेदित्याह — शान्तेति । नृत्ते आरभ्यमाणे सत्यार्द्रनागजिनेच्छा तस्य सम्भवति । एतत्सिद्ध्यर्थमिदमत्रोपाख्यानं द्रष्टव्यम् — पुरा खलु भगवान् गजरूपिणमसुरं विचित्रेण पराक्रमेण निहत्य तच्चर्म रुधिरार्द्रमेवोत्क्षिप्य रक्तावसिक्ततनुर्भवान्या च भयविह्वलयोद्वीक्ष्यमाणः शौर्यमत्तो ननर्त इति ॥ ३६ ॥

अथ महाकालमतीत्य नगरीशेषवर्तिनोऽपि तस्य रामाकटाक्षविषयत्वसम्पादनप्रकारमाह — गच्छन्तीनामिति —

गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तं
रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः ।
सौदामिन्या कनकनिकषस्निग्धया दर्शयोर्वीं
तोयोत्सर्गस्तनितमुखरो मा च भूर्विक्लवास्ताः ॥ ३७ ॥

तत्र विदिशायां नरपतिपथे तमोभिः रुद्धालोके अवलोकनमालोकः । रमणवसतिं गच्छन्तीनां योषितां सौदामिन्योर्वीं दर्शयेत्यर्थः । कनकनिकषस्निग्धयेति । रूक्षया चेद् दृष्टिप्रतिघातादुर्वीदर्शनमेव न सिध्येदिति भावः । तोयोत्सर्गस्तनिताभ्यां मुखरश्च मा भूरिति विद्युद्विधिप्रसक्तयोः प्रतिषेधान्मुखरशब्देनोद्वेगविषयत्वं लक्ष्यते । विक्लवास्ता इति । विधौ निषेधे चायमेव हेतुः । अस्मदादिवत् तमसि गन्तुं तोयोत्सर्गस्तनितादीनि च सोढुं नैव खलु तासां शक्तिरस्तीत्यर्थः ॥३७॥

एवं साधितधर्मकामेनापि त्वया विद्युत्खेदनिवृत्तये सिप्रावातप्रवृत्तिनिरीक्षणाय च सा रात्रिः समस्ता तत्रैव नेतव्या, गन्तव्यं चापरेद्युरित्याह — तां कस्यांचिदिति

---

१. All other com. except Dk. read नृत्यारम्भे ।

२. All other com. read सौदामन्या ।

३. All other com. except Dk. and Jn. read मा स्म भूः ।

तां कस्यांचिद्भवनवलभौ सुप्तपारावतायां
नीत्वा रात्रिं चिरविलसनात् खिन्नविद्युत्कलत्रः ।
दृष्टे सूर्ये पुनरपि भवान् वाहयेदध्वशेषं
मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ॥ ३८ ॥

सुप्तपारावतायां 'सुखसुप्तं न बोधयेद्' इति निषेधातिक्रमो मा भूदित्यर्थः । अध्वशेषमिति । अनेन त्वरातिशयोत्पादनायाध्वनो गतप्रायत्वं स्मारयति ।

"सुहृदर्थं प्रतिश्रुत्य ये तु पश्चान्न कुर्वते ।
तेषां पापेन लिप्येयं नायास्ये यद्यहं पुनः ॥"

इत्यादीतिहासवेदिनं भवन्तं प्रति पुनरुक्तमेव वाहयेदिति विधानं कृतमित्याह— मन्दायन्त इति ॥ ३८ ॥

तस्मिन् दिवसे दिवसान्तरेषु वा यदा सूर्योदये यात्रा सम्भवति तदैवं कर्तव्यमित्याह—तस्मिन् काल इति—

तस्मिन् काले नयनसलिलं योषितां खण्डितानां
शान्तिं नेयं प्रणयिभिरतो वर्त्म भानोस्त्यजाशु ।
प्रालेयास्रं कमलनयनात् सोऽपि हर्तुं नलिन्याः
प्रत्यावृत्तस्त्वयि कररुधि स्यादनल्पाभ्यसूयः ॥ ३९ ॥

तस्मिन् काले भानोर्वर्त्म नलिनीप्राप्तिमार्गमाशु त्यजेत्यन्वयः । आशुत्यागे कारणमाह— खण्डितानां योषितां नयनसलिलं प्रणयिभिः शान्तिं नेयमित्यनया लोकयात्रया सोऽपि भानुर्नलिन्याः स्वप्रेयस्याः प्रालेयास्रं कमलनयनात् हर्तुं प्रमार्ष्टुं प्रत्यावृत्त उपागतस्त्वयि कररुधि हस्तरोधके स्यादेवानल्पाभ्यसूय इति ॥ ३९ ॥

अथ गम्भीरा नाम नदी भविष्यति, सापि निर्विन्ध्यावद्विभ्रमान्दर्शयिष्यत्येव । तत्र गम्भीरहृदयत्वाद् बहुकालसाध्योऽस्या रागोत्पादनेनानुभव इति मत्वा तामप्यनादृत्य सहसैव न गन्तव्यम्, दर्शनसमकालमेव तस्या मनसि तव प्रवेशनिश्चयादित्याह — गम्भीरेति—

1. All other com. except Sv. and Vs. read कमलवदनात् ।

गम्भीरायाः पयसि सरितश्चेतसीव प्रसन्ने
छायात्मापि प्रकृतिसुभगो लप्स्यते ते प्रवेशम् ।
तस्मादस्याः कुमुदविशदान्यर्हसि त्वं न धैर्या-
न्मोघीकर्तुं चटुलशफरोद्वर्तनप्रेक्षितानि ॥ ४० ॥

निर्विन्ध्यावद् गम्भीरायाः सरितोऽपि प्रसन्ने चेतसि पयसि ते छायात्मा प्रतिबिम्बरूपो देहः प्रकृतिसुभगो (प्रवेशं) लप्स्यते प्राप्स्यति। चेतःस्थानगतमान्तरं पयोऽस्याश्चेत इति मन्यते। इवशब्द एवकारार्थः, लप्स्यत एवेति सम्बन्धनीयः। चेतसि नैव भवतीति भावः। तस्मादस्याः शफरोद्वर्तनप्रेक्षितानि स्खलितगत्यादीनि च द्रष्टव्यम्। त्वं धैर्यात् दुष्करत्वबुद्धिजन्यात् मोघीकर्तुं नार्हसीति ॥ ४० ॥

अथ कृतगम्भीरासम्भोगस्यास्य तत्सकाशान्निष्क्रमणमशक्यमेव भवेदिति मत्वा तत्रावधानमुत्पादयितुं तदशक्यतां तावत् स्मारयति — तस्याः किञ्चिदिति—

तस्याः किञ्चित् करधृतमिव प्राप्तवानीरशाखं
हृत्वा नीलं सलिलवसनं मुक्तरोधोनितम्बम् ।
प्रस्थानं ते कथमिव[1] सखे लम्बमानस्य भावि
ज्ञातास्वादो विवृतजघनां[2] को विहातुं समर्थः ॥ ४१ ॥

प्रियतमे त्वयि दृष्टिपथमुपसरति रिरंसावशेन स्रंसमानत्वादीषत्करेण विधृतमिव संसक्तवेतसशाखं सलिलवसनं मुक्तरोधोनितम्बं विमुक्तं तीररूपं श्रोणीचक्रं यथा भवति तथा हृत्वा लम्बमानस्य तया सह क्रीडाविशेषैर्विलम्बं कुर्वतस्ते कथमिव प्रस्थानं भावीत्यशक्यतामुक्त्वा लोकप्रसिद्ध्या समर्थयते ज्ञातास्वाद इति। स्त्रीभोगरसाभिज्ञ इत्यर्थः। विवृतजघनां प्रकटितश्रोणीचक्रपुरोभागाम्। नितम्बशब्दस्यात्र 'पश्चान्नितम्बः स्त्रीकट्याः' इत्यमरसिंहोक्तोऽर्थो नाश्रीकार्यः।

'नितम्बः पश्चिमश्रोणीविभागे कटके कटौ'

इति वैजयन्त्या कटिप्रदेशमात्रवाचित्वमुक्तम्, तदेव गृहीतव्यम्। पश्चिमभागवाचित्वे विवृतजघनामिति पुरोभागवाचिना जघनपदेनानुवादासम्भवात् को विहातुं समर्थ इति नात्र विद्वदविद्वद्विभागो वृद्धयुवतिविभागो वा दृश्यत इत्यर्थः। विहातुमिति

---

१. Dk. Ml. Ps. Vl. अपि for इव।
२. Ms. Sd. Sv. St. Vs. विपुलजघनां, Vl पुलिनजघनाम्।

स्ववशां रहसि समीपवर्तिनीमनुरागिणीं परिहर्तुमिति द्योत्यते। तस्मात्तर्हि पूर्वमुक्तं मोघीकर्तुं नार्हतीति तत्राह — सखे इति। अस्ति खलु प्रस्थाननिर्वाहकमत्र सखित्वं मत्समानदुःखत्वं नामैकं वस्त्वित्यर्थः। तदुक्तं कुमारसम्भवे—

"दयितास्वनवस्थितं नृणां न खलु प्रेम चलं सुहृज्जने"

इति॥ ४१॥

अथ देवगिरिप्रदेशयायिनस्तवाप्युज्जयिनीवासिनामिव रतिश्रमापनोदी वायुर्भविष्यतीत्याह — त्वन्निष्यन्देति—

त्वन्निष्यन्दोच्छ्वसितवसुधागन्धसम्पर्करम्यः
स्रोतोरन्ध्रस्तनितसुभगं दन्तिभिः पीयमानः।
नीचैर्वास्यत्युपजिगमिषोर्देवपूर्वं गिरिं ते
शीतो वायुः परिणमयिता काननोदुम्बराणाम्॥ ४२॥

त्वत्तो निष्यन्देन वर्षेणोच्छ्वसिताया वसुधाया गन्धेन सम्पर्कात् सुरभिः, अत एव स्रोतोरन्ध्रस्तनितेन नासेन्द्रियद्वारवर्तिना शब्देन सुभगं मनोहरं यथा भवति तथा दन्तिभिः पीयमानः, प्रावृषेण्यत्वात् शीतो वायुः नीचैः शनैः शनैः ते वास्यति।

'स्रोतोऽम्बुनिर्गमद्वार इन्द्रियेऽप्सु जलस्रुतौ'

इति वैजयन्ती। देवपूर्वं गिरिमुपजिगमिषोरिति। स्ववाचके गिरिशब्दे देवशब्दः पूर्वो भागो यस्य तं उपजिगमिषोः। तद्देशवर्तिनां मनुष्याणामुपकारक एवायं वायुरित्याह—काननोदुम्बराणां परिणमयिता उपभोगक्षमामवस्थां जनयन् इति॥४२॥

तत्र भगवदाराधनेन महान् पुण्यपूरः सम्पादनीय इत्याह — तत्र स्कन्दमिति —

तत्र स्कन्दं नियतवसतिं पुष्पमेघीकृतात्मा
पुष्पैः साधु स्नपयतु भवान् व्योमगङ्गाजलार्द्रैः।
रक्षाहेतोर्नवशशिभृतो वासवीनां चमूना-
मत्यादित्यं हुतवहमुखे सम्भृतं तद्धि तेजः॥ ४३॥

---

१. All other com. read ध्वनित for स्तनित।

२. Jn. मधुरं for सुभगं।

३. Jn. Ps. वातः।

४. All other com. except Ps. read पुष्पासारैः for पुष्पैः साधु।

५. Sd. वसूनां।

तत्र देवगिरौ नियतवसतिं नित्यसन्निहितं स्कन्दं भवान् पुष्पमेघो भूत्वा व्योमगङ्गाजलेन आर्द्रैः प्रोक्षितैः साधु भक्त्या स्नपयतु स्थगयतु। एवं तदनुरूपमाराधनप्रकारमुक्त्वा तत्र भक्तिमुत्पादयितुं देवं प्रशंसति—रक्षेति। नवशशिभृता महादेवेन तारकाद्युपप्लुतानां वासवीनां चमूनां रक्षाहेतोः देव्यां सम्भृतमाहृतं पुनर्देव्या तत्सोढुमक्षमया भूतधात्र्यां पृथिव्यां तया चाक्षमया हुतवहमुखे। कर्मधारयोऽयम्, मुखं हि देवानामग्निः। तेन चाक्षमेण गङ्गायाम्, तया शरवणे कृत्तिकासु च सम्भृतम्। अत्यादित्यं अतिक्रान्तद्वादशादित्यं, तेजःपुञ्जं हि तदित्यर्थः। मध्यवर्तिनो वह्नेरुपादानेन पूर्वापरस्थानान्युपात्तानि भवेयुरिति मत्वोक्तं हुतवहमुख इति। अम्बिकायां तेजस आधाने भगवतः शरीरकर्तृत्वं स्थानान्तरेषु मानसमिति द्रष्टव्यम्॥ ४३॥

पुनरपि तदाराधनप्रकारमाह—ज्योतिर्लेखेति—

ज्योतिर्लेखावलयि गलितं यस्य बर्हं भवानी
पुत्रप्रेम्णा [१]कुवलयदलक्षेपि कर्णे करोति।
धौतापाङ्गं हरशशिरुचा पावकेस्तं मयूरं
पश्चादद्रिग्रहणगुरुभिर्गर्जितैर्नर्तयेथाः॥ ४४॥

ज्योतीरूपा लेखा एव वलयान्यस्येति लेखावलयि, अत एव कुवलयदलक्षेपि तन्निन्दाकारि गलितं स्वयमेव भ्रष्टं यस्य बर्हं भवानी पुत्रप्रेम्णा कर्णे करोति अवतंसं कल्पयति। पुत्रप्रेम्णेवेत्यत्र लिङ्गं यस्य बर्हमिति। मयूरान्तरे बर्हानङ्गीकारात् पुत्रस्नेह एव कारणं न बर्हस्नेह इति सिध्यति। तं पावकेरग्न्यपत्यस्य मयूरं हरशशिरुचा विशेषतः शुक्लापाङ्गं अद्रिग्रहणगुरुभिः अद्रिणा गुहाभिः स्वीकरणात् प्रतिशब्देन महद्भिः गर्जितैः पश्चात् नर्तयेथाः। हरभवानीसम्बन्धकथनेन तावप्यनेन कर्मणा प्रीतौ स्यातामिति विवक्षितम्॥ ४४॥

आराध्यैनं शरवणभवं [२]देवमुल्लङ्घिताध्वा
सिद्धद्वन्द्वैर्जलकणभयाद् वीणिभिर्मुक्तमार्गः।
व्यालम्बेथाः सुरभितनयालम्भजां मानयिष्यन्
स्रोतोमूर्त्या भुवि परिणतां रन्तिदेवस्य कीर्तिम्॥ ४५॥

---

१. Jn. Ml. कुवलयदलप्रापि, Vl. कुवलयपदप्रापि, St. कुवलयदलस्पर्धि।
२ Vl. भुवं for भवं।

आराध्येति । पूर्वोक्तं हुतवहपदं स्थानान्तराणामप्युपलक्षणमिति द्योतय-न्नाह—शरवणभवमिति । वीणिभिः वीणावद्भिः जलभयहेतुरिदं विशेषणम् । आर्द्र-तन्त्रीका वीणाः न स्वनन्तीति । (व्यालम्भनेन? यज्ञा पशूनां आलम्भेन) तच्चर्मराशेर्जातां चर्मण्वतीसंज्ञां रन्तिदेवस्य राज्ञः कीर्तिं (मानयिष्यन् व्यालम्बेथाः)। अनेन माननी-यत्वमुक्तम् ॥ ८५ ॥

त्वत्सम्माननकाले त्वामेव निमित्तीकृत्य देवा अपि तां मानयिष्यन्तीत्याह — त्वय्यादातुमिति—

त्वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचोरे
तस्याः सिन्धोः पृथुमपि तनुं दूरभावात् प्रवाहम् ।
प्रेक्षिष्यन्ते गगनगतयो नूनमावर्ज्य दृष्टी-
रेकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम् ॥ ४६ ॥

शार्ङ्गिणो वर्णचोरे नीलतरे त्वयि जलमादातुमवनते तस्याः सिन्धोः पृथुमपि प्रवाहं दूरभावात् तनुं स्वल्पमिव लक्ष्यमाणं भुवो मुक्तागुणमिव गगन-गतयः प्रेक्षिष्यन्ते । प्रशब्देन दीर्घकालादरनैरन्तर्याणि सूचितानि । स्थूलमध्येन्द्र-नीलं स्थूलो मध्यस्थः इन्द्रनीलमणिर्यस्य स तथोक्तम् ॥ ४६ ॥

अथ दशपुरं नाम नगरं भविष्यति । तत्र भवतो भूयाननुभव इत्याह— तामुत्तीर्येति—

तामुत्तीर्य व्रज परिचितभ्रूलताविभ्रमाणां
पक्ष्मोत्क्षेपादुपरिविलसत्कृष्णशारप्रभाणाम् ।
कुन्दक्षेपानुगमधुकरश्रीमुषामात्मबिम्बं
पात्रीकुर्वन् दशपुरवधूनेत्रकौतूहलानाम् ॥ ४७ ॥

परिचयोऽभ्यासः । ऊर्ध्ववर्तिविषयनिरीक्षणात् पक्ष्मोत्क्षेपः, कृष्णेन शारा प्रभा, कृष्णशारप्रभा, उपरि विलसन्ती सा येषामिति विग्रहः । कृष्णशब्दोऽत्र गुण-वाची ; प्रभाशब्दः सितप्रभां वदति ; शारशब्दो वर्णद्वयसाङ्कर्यमाह । कुन्दपुष्पस्यो-परि क्षेपः कुन्दक्षेपः तस्मिन् सत्यनुगच्छतीति कुन्दक्षेपानुगः, ततः कर्मधारयः, ततः षष्ठीसमासः, तां मुष्णातीति कुन्दक्षेपानुगमधुकरश्रीमुट् तेषां कौतूहलानां कुतूहलकार्याणां वीक्षणविशेषाणां आत्मबिम्बं स्वशरीरं पात्रीकुर्वन् । स्निग्धनीलत्वा-दिभिः स्वगुणैस्तासां कुतूहलोत्पादनमत्र कृत्यर्थः ॥ ४७ ॥

अथ ब्रह्मावर्तः तन्मध्यवर्ति कुरुक्षेत्रं च पुण्यदेशौ भविष्यतः । तत्र पुण्यत्वतारतम्यं त्वरातिशयं च निरूप्य व्यापारविशेषं विदधाति—ब्रह्मावर्तमिति –

**ब्रह्मावर्तं जनपदमथ छायया गाहमानः**
**क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद्भजेथाः ।**
**राजन्यानां शितशरशतैर्यत्र गाण्डीवधन्वा**
**धारापातैस्त्वमिव कमलान्यभ्यवर्षन्मुखानि ॥ ४८ ॥**

"सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् ।
तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥"

इति मनुः । तत्र छायया गाहमानः सन् भारतं युद्धमिहातीतमिति कैश्चिल्लिङ्गैः सूचयन्तं तन्मध्यदेशं कुरुक्षेत्रं शरीरेणैव भजेथाः । अत्र छायया गाहनबुद्धिः कर्तव्येत्यर्थसिद्धं छायागाहनं विदधतोऽभिप्रायः । तदिति पुण्यत्वप्रसिद्धं स्मारयति । अस्य पुण्यत्वातिशये भूमण्डलवासिनामनुमतिं दर्शयति— राजन्यानामिति । धारापातैरिति शराणामक्षय्यत्वं पर्यायमुक्तत्वमयत्नमुक्तत्वं चोच्यते । त्वमिवेति सहायानपेक्षत्वं वदति । कमलानीति म्रियमाणानां मुखविकासमाह ॥ ४८ ॥

या तु ब्रह्मावर्तस्योत्तरसीमा नदी सरस्वती नाम तस्यामाप्लवनमपि कर्तव्यमेवेत्याह— हित्वा हालामिति —

**हित्वा हालामभिमतरसां रेवतीलोचनाङ्कां**
**बन्धुस्नेहात् समरविमुखो लाङ्गली याः सिषेवे ।**
**कृत्वा तासामभिगममपां सौम्य ! सारस्वतीना-**
**मन्तःशुद्धस्त्वमसि भविता वर्णमात्रेण कृष्णः ॥ ४९ ॥**

लाङ्गली बलभद्रः । रेवती तद्भार्या । लोचनप्रतिबिम्बे लोचनशब्दः । बन्धुस्नेहात् समरविमुखः युधिष्ठिरदुर्योधनयोस्तुल्यबलात् स्नेहात् भारतसमराद्विमुखो भगवाननन्तः सनियमकं याः सिषेवे तासां सारस्वतानामपामन्तरभिगमं कृत्वा

---

१. All other com. except Dk. Jn. and Ml. read अधः for अथ.।
२. Vl. अभ्याषिञ्चत् for अभ्यवर्षत्।
३. All other com. except Dk. and Jn. read बन्धुप्रीत्या।
४. Jn. अधिगमं।

त्वं शुद्धो भविता । श्रीरामकृष्णव्यासादिवद्वर्णमात्रेण कृष्ण इत्यर्थः । जलादानमर्थसिद्धं भवतीति मत्वा प्लवनमेवोक्तम् ॥ ४९ ॥

ततो गच्छतस्तव तत्समा तदधिका वा गङ्गानदी पथि भविष्यतीत्याह — तस्माद्गच्छेरिति —

तस्माद् गच्छेरनुकनखलं शैलराजावतीर्णां
जह्नोः कन्यां सगरतनयस्वर्गसोपानपङ्क्तिम् ।
गौरीवक्त्रे भ्रुकुटिरचनां या विहस्येव फेनैः
शम्भोः केशग्रहणमकरोदिन्दुलग्नोर्मिहस्ता ॥ ५० ॥

हिमवत्पादः कनखलः । शैलराजो हिमवान् । जह्नोः कन्यां गङ्गाम् । अवतरणकार्यमुक्तं सगरेति । न च हिमवानप्यस्या जन्मभूमिरिति द्योतयितुं महादेवजटामप्यावासभूमिं गौरीसपत्नीत्वमुत्प्रेक्ष्य तदनुरूपेणोक्तिप्रकारेण दर्शयति — गौरीवक्त्रेति । तया स्वाश्रयत्वेन कृतस्य जटाग्रहणस्य केशग्रहणशब्दोपादानात् चुम्बनाङ्गकेश(ग्रहण)प्रतीतिः स्यादिति भावः । इन्दुलग्नोर्मिहस्तेति । भर्तुर्यद्दयितं भूषणादि तदपीतरसमक्षमपरा स्वहस्ते करोतीत्येतदपि सपत्नीहेलनमेव इत्यभिप्रायः ॥ ५० ॥

अथ तदीयसलिलोपादाने त्वत्स्थितिप्रकारविशेषेण तस्या अपि शोभाविशेषस्त्वया सम्पादयितुं शक्य इत्याह — तस्या इति —

तस्याः पातुं सुरगज इव व्योम्नि पश्चार्धलम्बी
त्वं चेदच्छस्फटिकविशदं तर्कयेस्तिर्यगम्भः ।
संसर्पन्त्या सपदि भवतः स्रोतसि छायया सा
स्यादस्थानोपगतयमुनासङ्गमेवाभिरामा ॥ ५१ ॥

त्वं व्योम्न्येव स्थित्वा तिरश्चीनः पश्चार्धलम्बी च भूत्वा चेत् तस्या अम्भः पातुं तर्कयेस्तर्हि सपदि स्रोतसि संसर्पन्त्या कात्स्न्र्येन व्याप्नुवन्त्या भवतः छायया सा गङ्गा अस्थाने कनखलदेशेऽप्युपगतेव यमुनासङ्गमं अभिरामा स्यादित्यर्थः । अवगाह्य पाने क्रियमाणे छाया न स्यादिति कृत्वा व्योम्न्यवस्थानमुक्तम् । तिर्यगवस्थानाभिधानं तु शरीरेण नद्यां व्याप्तिसिद्धये कृतम् । न खल्वति-

१. Dk. गौरी वक्त्रे भ्रुकुटिरचनां; all other com. except Ps. read गौरीवक्त्रभ्रुकुटिरचनां ।

२. Sd. Sv. Vl. Vs पूर्वार्धलम्बी ।

३. Ml. Ps. Sl. Vs. छाययासौ ।

पृथ्व्यः प्रपातदेशे नद्यः, अतस्तिर्यगवस्थानेनैव नदीव्याप्तिः सिद्ध्येदेव, न तु विशेषेण देहदैर्घ्यसम्पादनापेक्षा स्यादिति भावः । पातुमित्यनेन मुखस्य तावत् सलिलदेशं यावलम्बनमुक्तं भवतीति मत्वा कायान्तरस्यापि तादृक्त्वसिद्धये पश्चार्धलम्बीत्युक्तम् । सलिलप्रान्तयोर्मेघकोट्योश्च बद्ध्वाविच्छेदे सति छायैवेयमिति निश्चयाद्यमुनाबुद्धिर्न स्यादिति भावः । सुरगज इवेति । सोऽपि व्योमचारी कदाचित् स्नानेच्छाभावे तामनवगाह्य व्योम्न्येव स्थित्वा पिबेन्न मार्गवशात्तिरश्चीनश्च भवेत् । लम्बितकरचरणत्वमप्यस्त्येव ॥ ५१ ॥

अथ ततो गत्वा विश्रमाय हिमवच्छिखरावस्थितस्य भवतोऽचलान्तराल्लभ्यः कोऽपि शोभाविशेषो भविष्यतीत्याह —

आसीनानां सुरभितशिलं नाभिगन्धैर्मृगाणां
तस्या एव प्रभवमचलं प्राप्य गौरं तुषारैः ।
वक्ष्यस्यध्वश्रमविनयने तस्य शृङ्गे निषण्णः
शोभां शुभ्रां त्रिणयनवृषोत्खातपङ्कोपमेयाम् ॥ ५२ ॥

तस्या गङ्गाया एव प्रभवं उत्पत्तिस्थानम् अचलं हिमवन्तं प्राप्य तस्य शृङ्गे अध्वश्रमविनयने तच्छमनकारिणि निषण्णः त्रिणयनवृषोत्खातेन पङ्केन उपमेयामुपमातुं योग्यां शुभ्रां शोभां वक्ष्यसि धारयिष्यसि । मृगनाभिगन्धैः सुरभितशिलत्वं तच्छृङ्गस्याध्वश्रमविनायकत्वोक्तिशेषत्वेनोक्तम् । तुषारगौरत्वमग्रेस्त्रिणयनवृषत्वोक्तिबीजम ॥ ५२ ॥

एवं विश्रमार्थेषु मार्गवर्तिषु गिरिषु यत्तत्प्रथमप्राप्ते गिरावासारेण वनोपप्लपशमनविधानं कृतं वन्यारण्येष्विति द्वितीये चोक्तं तत् सर्वगामि इति द्योतयितुमन्तिमेऽपि करोति — तं चेदिति —

तं चेद्वायौ सरति सरलस्कन्धसङ्घट्टजन्मा
बाधेतोल्काक्षपितचमरीबालभारो दवाग्निः ।
अर्हस्येनं शमयितुमलं वारिधारासहस्रै-
रापन्नार्तिप्रशमनफलाः सम्पदो ह्युत्तमानाम् ॥ ५३ ॥

तं हिमवन्तं वायौ सरति वीजति सरलाख्यस्य वृक्षस्य स्कन्धे वृक्षान्तरशाखासङ्घट्टेन सङ्घट्टजन्मा दवाग्निः बाधेत चेत । असंशये संशयवचनमिदम् । ततश्चेदं

वचनम् 'आसारप्रशमितवनोपप्लवम्' इत्यत्र वनोपप्लवस्यापाक्षिकत्वोक्तिविरुद्धं न भवति । एवं दवाग्निं वारिधारासहस्रैः, सर्वस्वव्ययेनापीति यावत्, अलं सम्यक् शमयितुमर्हसीति । उल्काक्षपितचमरीवालभार इति वृक्षेभ्यः पतद्भिरुल्काभिर्विनाशिताश्चमरीमृगाणां पुच्छरोमनिवहा यस्य स इत्यर्थः । अनेन चामररक्षणात् तस्य शैलराजत्वमपि त्वदधीनमेवेत्युच्यते । इदमस्मिन्नर्थे सर्वस्वव्ययाभिधानं सतामितोऽधिकस्य कृत्यस्याभावात् कृतमित्याह — आपन्नार्तीति ॥ ५३ ॥

तस्मिन् गिरौ शरभास्सन्ति; ते गजारातयो गजपरिमाणवर्णशालिनं त्वामुत्पतनेन प्रहरिष्यन्ति । तत्र तत्प्रहारास्तावत् उत्पतनयोग्याद्गगनाध्वन ऊर्ध्वगमनेन प्रागेव परिहर्तव्या इत्यमुं वाक्यमन्तर्भाव्य ये तु मुक्ताध्वानमपि भवन्तं लङ्घयेयुः, लङ्घितुमुत्पतेयुरिति यावत्, तान् दुष्टसत्वांस्तुमुलेन करकावृष्टिपातेनावकीर्णान् विवशान् कुर्वीथाः इत्याह — ये संरम्भेति —

ये [2]संरम्भोत्पतनरभसाः स्वाङ्गभङ्गाय तस्मिन्
[3]मुक्ताध्वानं सपदि शरभा लङ्घयेयुर्भवन्तम् ।
तान् कुर्वीथास्तुमुलकरका[4]वृष्टिपातावकीर्णान्
[5]केषां न स्युः [6]परिभवफला निष्फलारम्भयत्नाः ॥ ५४ ॥

संरम्भरभसशब्दाभ्यामेकस्यामेव तीव्रक्रियाया आन्तरं बाह्यं च पर्वद्वयमुच्यते । यथाह दिवाकरः —

"आवेग एव विषये प्रतिघातिनि रोषवान् ।
अनुबन्धी च भूयोऽपि संरम्भत्वं प्रपद्यते ॥

सर्वात्ययानपेक्षी यस्त्वरावान् लङ्घितक्रमः ।
अशक्यः सोढुमन्यैश्च व्यापारो रभसः स्मृतः ॥"

इति ।

१. B व्ययेनेति ।
२. Vl. ये त्वां मुक्तध्वनिमसहमाः कायभङ्गाय ।
३. Vl. दर्पोत्सेकादुपरि शरभाः लङ्घयिष्यन्त्यलङ्घ्यम् ।
४. Sd. Sv. Vl, Vs. वृष्टिहासावतीर्णान् ।
५. All other com. except Jn. and Ps. read के वा न स्युः ।
६. All other com. except Dk. and Ps. read परिभवपदं ।

ततश्च संरम्भेण रोषनिर्बन्धयुक्तेनावेगेन युक्तं यदुत्पतनं तत्र रभसाख्येनानुबन्धानपेक्षणादिधर्मविशेषेण युक्ता इत्यर्थः । ईदृशानां पराक्रमः स्वाङ्गभङ्गायैव भवेत न त्वदङ्गभङ्गायेति दर्शितं स्वाङ्गभङ्गायेति ।

'शरभस्तु गजारातिरुत्पादश्चाष्टपादवान् ।'

इत्यमरः । केचित्तु मुक्त्वा ध्वानमिति पठन्ति । तदा नदित्वेत्यर्थः । स तु वा स्वाङ्गभङ्गायेत्यत्र हेत्वभावप्रसङ्गान्नाङ्गीकार्यः[1] । केषामित्यादि । आरभ्यत इत्यारम्भः क्रियानिष्फलशब्देन पापफलत्वमुच्यते । पापफलक्रियाविषया यत्नाः स्वयमेव सर्वेषामपि कर्तृणां परिभवदायिन एव । निमित्तमात्रमेव तत्र प्रतिकर्तारो भवन्तीत्यर्थः ॥ ५४ ॥

तत्रापि भगवत्सेवावकाशः कश्चिदस्ति, न परं कैलास एवेत्याह— तत्र व्यक्तमिति —

तत्र व्यक्तं दृषदि चरणन्यासमर्धेन्दुमौलेः
शश्वत् सिद्धैरुपहृतबलिं[2] भक्तिनम्रः परीयाः ।
यस्मिन् दृष्टे करणविगमादूर्ध्वमुद्[3]धूतपापाः
कल्पिष्यन्ते[4] स्थिरगुणपदप्राप्तये[5] श्रद्दधानाः ॥ ५५ ॥

तत्र परोक्षं निवसतः शिवस्य चरणन्यासं लोकानुग्रहार्थं दृषदि व्यक्तं भक्त्या नमस्कृत्य प्रदक्षिणं कुर्वित्यर्थः । देवार्चनेषु क्रियातोऽपि भक्तेरेव प्राधान्यमिति दर्शयन्नाह— यस्मिन् दृष्ट इति । श्रद्दधाना भक्तियुक्ताः पुरुषाः यस्मिंश्चरणन्यासे दृष्टे विनापि क्रियान्तरं तं दृष्ट्वैवेत्यर्थः, स्थिरगुणपदप्राप्तये अनश्वरानन्दशिवलोकप्राप्तये कल्पिष्यन्ते । क्लृपिधातोरलंशब्दसमानार्थत्वाच्चतुर्थी । 'सुरगणपदप्राप्तये' इति केचित् पठन्ति । तदयुक्तं, तत्र निवसतो दिव्यजनस्य स्वर्गकामनासम्भवात् करणविगमानपेक्षत्वाच्च पापोद्धूतेर्हेतुतयाभिधानं चास्मिन् पाठे व्यर्थं स्यात् । स्वर्गस्य हि ज्योतिष्टोमादिरेव कारणं न पापात्यन्तनाशः ॥ ५५ ॥

१. B. हेत्वभावात् for हेत्वभावप्रसङ्गात् ।
२. Dk. Ml. उपचितबलिं for उपहृतबलिम् ।
३. Ms. Sd. दूरं for ऊर्ध्वम् ।
४. Ms. Sd. Sv. सङ्कल्पन्ते, Vl. कल्पन्तेऽस्य
५. All other com. read गण for गुण ।

अथ गर्जितमपि त्वया भगवन्नृत्तशेषतया मुखकृत्ये विनियोक्तव्यमित्याह — शब्दायन्त इति---

शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणाः
[1]संरक्ताभिस्त्रिपुरविजयो गीयते किन्नरीभिः ।
[2]निर्ह्रादी ते [3]मुरव इव चेत् [4]कन्दरेषु ध्वनिः स्यात्
सङ्गीतार्थो ननु [5]पशुपतेस्तत्र भावी [6]समस्तः ॥ ५६ ॥

कीचकास्तावत् स्वरन्ध्रनिविष्टैरनिलैः पूर्यमाणा मधुरं शब्दायन्ते तानप्रदानं कुर्वन्ति । संरक्ताभिः रक्तकण्ठीभिः किन्नरीभिः त्रिपुरविजयः, पराक्रमान्तराणामप्युपलक्षणमेतत्, गीयते च । एवं स्थिते ते ध्वनिरपि मुरव इव कन्दरेषु निर्ह्रादी यदि स्यात् तत्र पशुपतेः सङ्गीतार्थः, कर्मधारयोऽयम्, समस्तः परिपूर्णः स्यात् ।

'नृत्तं गीतं च वाद्यं च त्रयं सङ्गीतमुच्यते ।'

इति हलायुधः ॥ ५६ ॥

ततः कैलासं गन्तुमृजुं सहायानुगुणं मार्गमुपदिशति — प्रालेयाद्रेरिति —

प्रालेयाद्रेरुपतटमतिक्रम्य तांस्तान् विशेषान्
हंसद्वारं भृगुपतियशोवर्त्म यत् क्रौञ्चरन्ध्रम् ।
तेनोदीचीं दिशम[7]नुसरेस्तिर्यगायामशोभी
श्यामः पादो [8]बलिविमथनाभ्युद्यतस्येव विष्णोः ॥ ५७ ॥

प्रालेयाद्रेरुपतटं ये विशेषा गिर्यन्तरेष्वविद्यमानाः पदार्थास्तान् सर्वानतिक्रम्य त्वरावशादुपेक्ष्य यत्तत्र क्रौञ्चगिरिमध्यस्थं रन्ध्रं भृगुपतिना शरेणैकेन निर्मितम्,

१. Ml. संसक्ताभिः ।
२. Ml. निर्ह्रादस्ते ।
३. Jn. Ml. Vl. Vs. मुरज ।
४. Ml. कन्दरीषु, Vl. कन्दरासु ।
५. Dk. पशुपतेर्नृत्यतस्तत्र पूर्णः ।
६. All other com. except Dk. Jn. and Vl. read समग्रः ।
७. Jn. अनुपतेः, Vl. अभिसरेः for अनुसरेः ।
८. Jn. बलिनियमनेऽभ्युद्यतस्य; all other com. except Dk. and Ps. read बलिनियमनाभ्युद्यतस्य ।

अत एव तद्यशसो देवलोकगमनाय मार्गभूतं हंसद्वारमिति प्रसिद्धं, तेन रन्ध्रेण दक्षिणोत्तरायतेन आयामशोभी भूत्वा उदीचीं दिशं तिर्यगनुसरेः इत्यर्थः । यदिदमुदग्गमनं तत् पूर्वापरायते शैले सति तिर्यग्गमनं भवतीति भावः । हन्तैवं गच्छन् भवान् त्रिविक्रमपदेनोपमेयो भविष्यति । महदिदं प्रयोजनं देहभाजामित्याह — श्यामः पाद इति ॥ ५७ ॥

गत्वा चोर्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसन्धेः
कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः ।
शृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खं
राशीभूतः प्रतिदिनमिव[1] त्र्यम्बकस्याट्टहासः ॥ ५८ ॥

क्रौञ्चरन्ध्रमुखान्निर्गत्य किञ्चिदूर्ध्वं गत्वा निकटवर्तिनः कैलासस्यातिथिश्च स्याः । अवसितो मार्गोपदेश इति द्योतयितुं वाक्यार्थसमुच्चये चकारः । अतिथित्वकथनेन तत्पूज्यत्वमस्य सूचयति[2] । कैलासं विशिनष्टि — त्रिदशवनितादर्पणस्य[3] नैर्मल्यातिशयात् त्रिदशवनितानां स्वसौन्दर्यनिरीक्षणार्थं दर्पणभूतस्य, अत एव मनोज्ञत्वाद्दशमुखेन महेश्वरमपि विस्मृत्य तं[4] लङ्कां नेतुमिच्छता शिथिलीकृतप्रस्थसन्धेः । एवं मनोज्ञतया प्रशंसा कृता । अथ महत्त्वेनापि प्रशंसति — शृङ्गोच्छ्रायैरिति । उच्छ्रितैः शृङ्गैरित्यर्थः । हिमवच्छृङ्गान्तरातिशायि महत्वं वैशद्यं चास्य धवलबहलमहेश्वराट्टहासत्वेनोत्प्रेक्ष्य सम्भावयति — राशीभूत इति । अट्टशब्दोऽतिशयवाची ॥ ५८ ॥

तस्य महेश्वराश्रयत्वेन दवाग्न्युपप्लवाभावेऽपि त्वया बलदेवसादृश्यं भवेदिति भवन्तं प्रत्युपकार्यत्वं महदस्त्येवेत्याह — उत्पश्यामीति —

उत्पश्यामि त्वयि तटगते स्निग्धभिन्नाञ्जनाभे
सद्यःकृत्तद्विरददशन[5]च्छेदगौरस्य तस्य ।

1. Ms. Sd. St. Sv. प्रतिदिशं, Vl. प्रतिनिशं।
२. B. दर्शयति।
३. B omits this word.
४. A omits this word.
५. All other com. except Dk, Jn. and Ps. read दशन for रदन।

शोभामद्रेः स्तिमितनयनप्रेक्षणीयां भवित्री-
मंसन्यस्ते सति हलभृतो मेचके वाससीव ॥ ५९ ॥

भिन्नमञ्जनं भिन्नाञ्जनं, स्निग्धस्य भिन्नाञ्जनस्येवाभा यस्य स तथोक्तः । सद्यः कृत्तो यो द्विरदस्य रदनच्छेदो दन्तखण्डः तद्वद्गौरस्तथोक्तः । ईदृशे त्वयि तादृशस्य तटगते सति मेचके वाससि हलभृतोऽसन्यस्ते सतीव भक्तैः दिव्यजनैः स्तिमितनयनप्रेक्षणीयां तस्याद्रेर्भवित्रीं शोभामुत्पश्यामीति ॥ ५९ ॥

अथ शिवयोः पाक्षिकं कमपि सेवावकाशं तत्कालोचितं सेवाप्रकारं च दर्शयति — हित्वा तस्मिन्निति —

हित्वा[२] तस्मिन् भुजगवलयं शम्भुना दत्तहस्ता
क्रीडाशैले यदि तु[३] विचरेत्[४] पादचारेण गौरी ।
भङ्गीभक्त्या[५] विरचितवपुः स्तम्भितान्तर्जलौघः[६]
सोपानत्वं[७] कुरु मणितटारोहणायाग्रयायी[८][९] ॥ ६० ॥

तस्मिन् कैलासे क्रीडाशैलप्रदेशे करस्याव्यवहितस्पर्शसिद्धये भुजगवलयं हित्वा शम्भुना दत्तहस्ता यदि तु गौरी पादचारेण विचरेत् तर्हि त्वमग्रयायी भूत्वा मणितटारोहणाय स्वशरीरेण सोपानत्वं कुरु । भङ्गीभक्त्या विरचितवपुः । भङ्गीशब्देन सोपानोचितसन्निवेश उच्यते, भक्तिशब्देन विभागः; भङ्ग्यर्हेण विभागेन विरचितशरीर इत्यर्थः । स्तम्भितान्तर्जलौघः स्वाभ्यन्तरप्रदेशावस्थितं जलौघं स्तम्भयित्वेत्यर्थः ॥ ६० ॥

अथ तत्र यात्राप्रत्यूहं देहपीडां चावश्यंभाविनीं कामप्युत्प्रेक्ष्य केन तावदुपायेन प्रतिहर्तव्यावित्याह — तत्रेति —

---

१. Jn. Vl. लीलां for शोभाम् ।
२. Jn. St. Sv. तस्मिन् हित्वा, Vl. हित्वा नीकम् ।
३. All other com. read च ।
४. Dk. Jn. Vl. विहरेत् ।
५. Ps. भूङ्गी भक्त्या ।
६. Vl. स्तम्भितान्तर्जलोऽस्याः ।
७. Dk. सोपानं त्वम् ।
८. Vl. सुखपदस्पर्शमारोहणेषु ।
९. Jn. अग्रचारी for अग्रयायी ।

तत्रावश्यं [1]वलयकुलिशोद्घट्टनोद्गीर्णतोयं
नेष्यन्ति त्वां सुरयुवतयो यन्त्रधारागृहत्वम् ।
ताभ्यो मोक्षस्[2]तव यदि सखे! घर्मलब्धस्य न स्यात्
क्रीडालोलाः श्रवणपरुषैर्गर्जितैर्भा[3]ययेस्ताः ॥ ६१ ॥

यन्त्रधारागृहत्वं नेष्यन्तीति यात्राप्रत्यूह उच्यते । वलयेत्यादिना देहपीडां वदति । वलयप्रत्युप्तेन कुलिशाख्येन रत्नेन यदुद्घट्टनं तेनोद्गीर्णतोयं कृत्वेति तत्कालविशेषणमेतत् । उद्घट्टनशब्देन स्वदेहे सर्वत्रैव सूक्ष्मसुषिरनिर्माणमुच्यते । अनयोरापदोः परिहारोपाय उत्तरार्धेनोच्यते । आषाढमास्येव तस्य तद्देशप्राप्त्यसम्भवाद् घर्मलब्धेत्युक्तम् । लप्स्यमानस्येत्यर्थः । 'धातुसम्बन्धे प्रत्ययाः' इति भूतकालनिर्देशः । ताभ्यस्तव मोक्षो यदि न स्यादिति । एको भवान् बह्व्यस्ता इति बलाबलविशेषस्तद्धेतुको मोक्षाभावश्च यदि ते बुद्धौ स्यादित्यर्थः । क्रीडालोला इति । त्वद्ग्रहणक्रीडाप्रसक्ता इत्यर्थः । श्रवणपरुषैरिति पारुष्यमेव सम्पाद्यं न बाधकत्वमिति विवक्षितम् । गर्जितैरित्यशनिस्पर्शरहितैः केवलैरित्यर्थः । किं बहुना । न ताः प्रति पीडा काचिदपि कर्तव्या, भयमात्रोत्पादनेन त्वद्ग्रहणक्रीडाभिसन्धिभङ्ग एव कर्तव्य इत्याह— भाययेस्ता इति ॥ ६१ ॥

यत्तत् 'प्रालेयाद्रेः' इत्यत्र रम्यपदार्थानुभवातिक्रमणमुक्तं तदत्र न कर्तव्यमित्याह — हेमाम्भोजेति —

हेमाम्भोजप्रसवि सलिलं मानसस्याददानः
कुर्वन् [4]कामात् क्षणमुखपटप्रीतिमै[5]रावतस्य ।
धुन्वन्[6] कल्पद्रुमकिसलयान्यंशु[7]कानि स्ववातै-
र्नानाचेष्टैर्जलद! ललितैर्निर्विशेस्तं नगेन्द्रम् ॥ ६२ ॥

१. Vl. जनितसलिलोद्गारमन्तःप्रवेशात्; Vs. कुलिशवलय for वलयकुलिश ।
२. Jn. यदि तव ।
३. Jn. Vs. भीषयेस्ताः; Ms. Sd. Sv. भापयेस्ताः ।
४. Jn. कामम् ।
५. Jn. Vl. ऐरावणस्य ।
६. Vl. धुन्वन् वातैः सजलपृषतैः कल्पवृक्षांशुकानि ।
छायाभिन्नः स्फटिकविशदं निर्विशेः पर्वतं तम् ॥
७. Ml. Sd. St. Sv. अंशुकानीव वातैः ।

हेमाम्भोजप्रसवीति सलिलस्य गुणातिशयं दर्शयति । कामाद्यथेष्टम् । ऐरावतस्येत्यनेनाभ्रमातङ्गत्वान्मानसविहारिषु सुरगजेषु स एव त्वया सम्भावनीयः, तस्यैव च शुक्लवर्णस्य त्वं मुखपटीभवितुं योग्य इत्युच्यते । क्षणशब्देन चिरावस्थाने सति मत्तस्य तस्य यादृच्छिकेन पीवरकरघट्टनेन भङ्गोऽपि सम्भवतीति ध्वन्यते । स्वबातैर्विशेषभूतैर्नानाचेष्टैः ललितैरिति विलासप्राधान्यं द्योतयितुमेवमभिधानं कृतं न तु ललितानामेव करणत्वशक्त्या इति मन्तव्यम् ॥ ६२ ॥

या खलु तद्वर्तिन्यलका नाम तस्यास्त्वां प्रति न लक्षणं वक्तव्यं, प्रत्यब्दमनुभूतचरत्वात् प्रत्यभिज्ञाविषयैव भविष्यतीत्याह — तस्योत्सङ्ग इति--

तस्योत्सङ्गे प्रणयिन इव स्रस्तगङ्गादुकूलां
न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कामचारिन् ।
या वः काले वहति सलिलोद्गारमुच्चैर्विमानै-
र्मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृन्दम् ॥ ६३ ॥

या वः काले वर्षासूच्चैर्विमानैः सलिलोद्गारं वर्षधारायुक्तं अभ्रवृन्दं वहति । कथमिव ? कामिनी मुक्ताजालग्रथितमलकमिव । तामलकां तस्योत्सङ्गे प्रणयिनीमिव शोभमानां दृष्ट्वा न पुनर्न ज्ञास्यसे ; कामचारित्वेन प्राप्तिसम्भवात् ज्ञास्यस एवेत्यर्थः । उत्सङ्गवर्तिन्या कामिन्या साम्यं वक्तुमुक्तं स्रस्तेति ॥ ६३ ॥

॥ पूर्वसन्देशः समाप्तः ॥

१. Jn. Ml. Vl. उच्चैर्विमाना for उच्चैर्विमानैः ।

## अथ उत्तरसन्देशः ।

अथ 'गन्तव्या ते वसतिरलका नाम' इति नामशब्दाभिहिताया रमणीयताप्रसिद्धेर्याथार्थ्यं दर्शयन् पुरं तावद्वर्णयति — विद्युत्वन्तमिति—

विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः
सङ्गीताय प्रहतमुरवाः[1] स्निग्धपर्जन्य[2]घोषम् ।
अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः
प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥ १ ॥

तैस्तैरुक्तैरनुक्तैश्च विशेषैः रमणीयत्वद्योतकैः व्यावर्तकधर्मैस्त्वां तुलयितुं त्वत्साम्यं सम्पादयितुमलं पर्याप्ता भवन्तीति ॥ १ ॥

यत्र षण्णामप्यृतूनां नित्यसं[3]निधानाद् वध्वः सदैव सर्वर्तुकुसुमालङ्कृता भवन्तीत्याह —

हस्ते लीलाकमलमलका[4] बालकुन्दानुविद्धा[5]
नीता लोध्रप्रसवरजसा पाण्डुतामाननश्रीः[6] ।
चूडापाशे नवकुरवकं चारु कर्णे शिरीषं
सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम् ॥ २ ॥

पाण्डुतां[7] नीता लब्धपरभागा चूडापाशे केशकलापे । त्वदुपगमशब्देन यत्कुसुममात्रसम्पत्तये वर्षर्तोः ऋत्वन्तराणामिव नित्यसन्निधानं तदनूद्यते न तु तात्कालिको मेघस्य तद्देशसम्बन्ध इति मन्तव्यम् । भवतिक्रिया च सर्वत्रैव द्रष्टव्या । अलकसम्बन्धे बहुवचनान्ता कर्तव्या ॥ २ ॥

एवं प्रासादेषु स्त्रीषु च वर्णितासु तत्र ताभिः सह यक्षाणां मधुपानप्रकारान्तरमाह —

---

१. All other com. except Dk. and Ps. read मुरजाः ।

२. All other com. except. Dk. Jn. and Ps. read गम्भीर for पर्जन्य ।

३. B. सन्निधौ for सान्निधानात् ।

४. Ms. Sd. Sv. Vl. अलकं, Jn. Ml. अलके for अलका ।

५. Dk. बालकुन्दानुवेधो, Jn. Vl. Vs. बालकुन्दानुविद्धं ।

६. Dk. Ml. आनने श्रीः for आननश्रीः ।

७. B. पाण्डुतालब्धपरभागा ।

यस्यां यक्षाः सितमणिमयान्येत्य हर्म्यस्थलानि
ज्योतिश्छायाकुसुमखचितान्युत्तमस्त्रीसहायाः ।
आसेवन्ते मधु रतिफलं कल्पवृक्षप्रसूति
त्वद्गम्भीरध्वनिषु शनकैः पुष्करेष्वाहतेषु ॥ ३ ॥

**यस्यां** नगर्यां **पुष्करेषु** वाद्यमुखेषु **आहतेषु** सत्सु **सितमणिमयानि** अत एव **ज्योतिश्छायाकुसुमैः** **खचितानि** रूषितानि **हर्म्यस्थलानि** **एत्य** **उत्तमस्त्रीसहायाः**, अत एव **रतिफलं** तत्प्रवर्तकं **कल्पवृक्षप्रसूति** **मधु** **आसेवन्ते** । त्वद्गम्भीरेति । तव गम्भीरा ध्वनिर्येषामिति विग्रहः । **शनकैरि**त्यारम्भकालभावी स्वभाव उक्तः ॥ ३ ॥

अथ मधुप्रयुक्ते रत्यारम्भे तासां लज्जारागमौग्ध्यसाध्वससम्मिश्रांश्चेष्टाविशेषान् युवजनानुरागोद्दीपकान् दर्शयति —

नीवीबन्धोच्छ्वसितशिथिलं यत्र बिम्बाधराणां
क्षौमं रागादनिभृतकरेष्वाक्षिपत्सु प्रियेषु ।
अर्चिस्तुङ्गानभिमुखमपि प्राप्य रत्नप्रदीपान्
ह्रीमूढानां भवति विफलप्रेरणा चूर्णमुष्टिः ॥ ४ ॥

**प्रियेषु क्षौममाक्षिपत्सु ह्रीमूढानां बिम्बाधराणां** चुम्बनविमर्दाभिव्यञ्जितबिम्बसादृश्याधरमणिविद्योतितमुखपङ्कजानां स्त्रीणां दीपनिर्वापणोद्देशेन प्रेरिता **चूर्णमुष्टिः रत्नप्रदीपानभिमुखं प्राप्यापि** रत्नमयत्वादेव निर्वापणाभावाद् **यत्र विफलप्रेरणा** भवति इत्यर्थः । रागादिति पदं मध्यवर्ति कर्तृविशेषणेन कर्मविशेषणेन च

१. Ml. Ms. Sd. रचितानि, Dk, Jn. Vl. Vs. रचनानि ।
२. Ps. प्रसूतिं, all other com. read प्रसूतं ।
३. Jn. मधुरं for शनकैः ।
४. Ps. उच्छ्वसन for उच्छ्वसित ।
५. Ms. Sd. Sv. Vl. Vs. यक्षाङ्गनानां ।
६. St. Vl. वासः कामात् for क्षौमं रागात ।
७. Dk. विद्युद्दीप्रान् for अर्चिस्तुङ्गान् ।
८. Vl. प्रेरणश्चूर्णमुष्टिः ।

सम्बध्यते । रागाद्धेतोरनिभृताः प्रियासु तत्तदवस्थोचितं किमपि किमपि कुर्वाणाः करा येषामिति विग्रहः । रागाद्धेतोः नीवीबन्धे यदुच्छ्वासितं तेन शिथिलमिति च ॥ ४ ॥

नेत्रा नीताः सततगतिना यद्विमानाग्रभूमे-[1]
आलेख्यानां सलिलकणिकादोषमुत्पाद्य सद्यः ।[2]
शङ्कास्पृष्टा इव जलमुचस्त्वादृशा यन्त्रजालैः-[3]
धूपोद्गारानुकृतिनिपुणा जर्जरा निष्पतन्ति ॥ ५ ॥[4]

सततगतिना नेत्रा प्रापकेणान्तरा नीताः त्वादृशाः त्वत्सयूथ्याः जलमुचो यद्विमानाग्रभूमेः आलेख्यानां चित्राणां सलिलकणिकाभिः दोषकणिकां प्रमादादुत्पाद्य शङ्कास्पृष्टा इव चिरावस्थाने सति जानीयुरेतेऽसत्कृतं दोषमिति शङ्कमाना इव सद्यः तत्रत्येषु लीलागृहेषु सत्सु धूपोद्गारानुकृतिनिपुणाः पश्यतां जनानां धूपोद्गारबुद्धिमेव जनयन्तो यन्त्रजालैः निष्पतन्ति । न तु यथागतं जालानां बहुछिद्रत्वात् । जर्जराः विशीर्णाङ्गाश्च भविष्यन्ति ।[5]

ननु कोऽनेन श्लोकेन पुरवर्णनोपयुक्तोऽर्थः कथ्यते । न तावच्चित्रवत्त्वं सचित्रा इत्युक्तत्वात् , नापि तुङ्गत्वं अभ्रंलिहाग्रत्वकथनात् , न च धूपगवाक्षसद्भावः तस्योज्जयिन्यां मनुष्यालयेऽप्युक्तत्वात् ; अतो मेघजनवृत्तान्तकथनमात्रमनर्थकमेतत् । अत्रोच्यते — सत्यं, नैष पुरवर्णनोपयुक्तः श्लोकः; किन्तु चतुर्भिः श्लोकैः पुरसौन्दर्यं तत्रत्यानां स्त्रीणां सर्वर्तुकुसुमालङ्कृतत्वं, ताभिः सह यक्षाणां मधुपानप्रवृत्तिमनन्तरभाविनि रत्यारम्भे तासां लज्जादिभावविशेषांश्च दर्शयित्वाऽनेन श्लोकेन मेघान्तरव्यापाराभिधायकेन तत्रापि तत्रैतत् सर्वं प्रत्यक्षमेवानुभवितुं निष्क्रमणप्रवेशावीषत्कराववेत्युच्यते । तस्मात्

'पर्यायोक्तं विना वाच्यवाचकत्वे वचस्तु यत्'

इति यदुच्यते सोऽत्रालङ्कार इति मन्तव्यम् ॥ ५ ॥

१. Dk. Jn. Ml. Vl. Vs. भूमीः for भूमेः ।
२. Jn. Sv. स्वजलकणिकादोषमुत्पाद्य; Ps. Vl. Vs. नवजलकणैर्दोषमुत्पाद्य ।
३. Jn. Vl. Vs. यत्र जालैः; Ml. जालमार्गैः ।
४. All other com. except Ps. and Vs. read धूम for धूप ।
५. B. छिद्रत्वात् ।

अथ विनैव पुरुषव्यापारं सुरतग्लानिविनयनप्रकारमाह —

यत्र स्त्रीणां प्रियतमभुजोच्छ्वासितालिङ्गितानां-
मङ्गग्लानिं सुरतजनितां तन्तुजालावलम्बाः ।
त्वत्संरोधापगमविशदैश्चन्द्रपादैर्निशीथे
व्यालुम्पन्ति स्फुटजललवस्यन्दिनश्चन्द्रकान्ताः ॥ ६ ॥

यत्र स्त्रीणां सुरतजनितामङ्गग्लानिं निशीथे चन्द्रकान्ता व्यालुम्पन्ति । कीदृशाः? वितानाधोभागे तन्तुजालावलम्बाः तन्तुषु प्रोतास्तथा स्वमहिमसिद्धेन त्वत्संरोधापगमेन नित्यविशदैः हरशिरश्चन्द्रस्य पादैः किरणैः स्फुटजललवस्यन्दिनश्च । स्त्रीजनमपि विशिनष्टि — प्रियतमानां भुजैः सञ्जातोच्छ्वासा यथा भवन्ति तथा । दृढमालिङ्गितानां भुजानां कठिनत्वेन [illegible] स्वाभाविकमबलात्वं रागवशान्नैव स्मरन्ति पुरुषा इति ध्वन्यते । प्रियतमशब्देन ता अपि स्वाशक्तिं नैव स्मरन्तीति द्योत्यते । निशीथशब्दो रात्रिमात्रं लक्षयति । निशायामिति वा पाठः ॥ ६ ॥

'हस्ते लीलाकमलम्' इत्यत्रालङ्कारेण सुन्दरीजनवर्णना कृता । अथ स्वाभाविकेन गुणेन वर्णयन् पुरवर्णनामवसाययति —

मत्वा देवं धनपतिसखं यत्र साक्षाद् वसन्तं
प्रायश्चापं न वहति भयान्मन्मथः षट्पदज्यम् ।
सभ्रूभङ्गप्रहितनयनैः कामिलक्ष्येष्वमोघै-
स्तस्यारम्भश्चतुरवनिताविभ्रमैरेव सिद्धः ॥ ७ ॥

यत्र धनपतिसखं अत एव तस्मिन् देशे साक्षात् प्रत्यक्षमेव वर्तमानं देवं मत्वा निरूप्य भयात् मन्मथः चापं प्रायो न वहति । नैव वहतीत्यर्थः । अत एव विभ्रमैरेवेत्येवकारः । षट्पदज्यमिति । अनेन ज्याभूताः षट्पदा अपि सर्वर्तुकुसुमालंकृते तस्मिन् देशे स्वानुभवपरा एव भवन्ति, न ज्याभावक्लेशमनुभवन्तीति ध्वन्यते । किं तर्हि तत्र रागोत्पत्तिकारणम् । तदाह — सभ्रूभङ्गेति । तस्य मन्मथस्य

---

१. Ms. Sd. Sv. Vl. Vs. भुजालिङ्गनोच्छ्वासितानां ।

२. Jn. इन्दुपादैर्निशीथे; Sd. प्रेरिताश्चन्द्रपादैः; St. द्योतिताश्चन्द्रपादैः; Vl. द्योतिताश्चन्द्रपादैः; Vs. द्योतिताश्चन्द्रपादैः ।

३. B. हरशिरश्चन्द्रपादैः ।

४. B. लीलाकमलमित्यलङ्कारेण ।

५. Dk. त्वामपि प्रेक्ष्य कामः for मन्मथः षट्पदज्यं ।

६. Jn. St. Sv. सभ्रूभङ्गं प्रहितनयनैः ।

**कामिलक्षेष्वारम्भः** शरप्रयोगव्यापारः चतुरवनिताविभ्रमैरेव सिद्धः सिद्धयतीत्यर्थः । विभ्रमाणां धनुश्शरप्रत्यादेशकत्वं दर्शयंस्तान् विशिनष्टि—**सभ्रूभङ्गे**ति ॥ ७ ॥

अथ स्वभवनाभिज्ञानमाह—

**तत्रागारं धनपतिगृहादुत्तरेणास्मदीयं**
**दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन ।**
**यस्योद्याने कृतकतनयः कान्तया वर्धितो मे**
**हस्तप्राप्यस्तबकनमितो बालमन्दारवृक्षः ॥ ८ ॥**

**तत्रेति** । तथाविधायामलकायामित्यर्थः । अनेन तथाविधत्वं तावदस्मदगारस्याप्यस्तीति सामान्यलक्षणमुक्तं भवति । विशेषलक्षणमुच्यते—**धनपतिगृहादुत्तरेणास्मदीयमगार**मिति । अदूरत्वमनेन प्रत्ययेनोच्यते । अदूरत्वकथनेन सौन्दर्येऽप्यल्पान्तरत्वमुक्तं भवति । परिवारजनानां पर्यन्तभवनानां च राजकुलेषु तथा दर्शनात् । एवं दिगन्तरव्यावृत्तिरुक्ता । भवनान्तरव्यावर्तकानि लक्षणानि उच्यन्ते । सुरपतेर्धनुरिव **चारुणा**, रत्नमयेनेति यावत्, तोरणेन द्वारि स्थितेन दूराल्लक्ष्यम् । तथा चास्योद्याने **मे कान्तया** कृतकतनयत्वेन वर्धितः प्रायेणेदानीं हस्तप्राप्यस्तबकनमितो बालो मन्दारजातीयो वृक्षो भवति । देवतरुविशेषवाची मन्दारशब्दः ॥ ८ ॥

**वापी चास्मिन् मरतकशिलाबद्धसोपानमार्गा**
**हैमैः स्फीता कमलमुकुलैर्दीर्घवैडूर्यनालैः ।**
**यस्यास्तोये कृतवसतयो मानसं सन्निकृष्टं**
**न ध्यास्यन्ति व्यपगतशुचस्त्वामपि प्रेक्ष्य हंसाः ॥ ९ ॥**

१. Dk. Ml. Ps. Vs. गृहान् for गृहात् ।
२. Dk. Jn. Ps. Vl. त्वदमरधनुश्चारुणा ।
३. Ml. Vl. यस्योपान्ते ।
४. Jn. वर्धितः कान्तया ।
५. A. जनानां for भवनानां ।
६. Sd. Ml. Vs. छन्ना, Vl. स्यूता for स्फीता ।
७. Ml. Ms. Sd. Sv. St. Vl. स्निग्धवैदूर्यनालैः ।
८. Ps. तीरे for तोये ।
९. Dk. नाध्यास्यन्ति ।

**वापी चास्मिन्** उद्याने अस्तीति शेषः। मरतकशिलाभिः **बद्धसोपानमार्गः यस्या इति विग्रहः**। मुकुलबाहुल्यकथनेन भूप्रदेशस्य सलिलस्य च गुणातिशयोऽन्वहमभिनवकुसुमसद्भावश्च सूचितः। नालदैर्घ्यकथनेनागाधतोयत्वमुक्तम्। दीर्घत्ववैडूर्यत्वयोरवगमः तोयस्वच्छत्वाद् भवति। तोयस्वच्छत्वस्य वर्षतावप्यनपायं **दर्शयति यस्यास्तोय** इति॥ ९॥

**तस्यास्तीरे विहित[1]शिखरः पेशलैरिन्द्रनीलैः**
**क्रीडाशैलः कनककदलीवेष्टन[2]प्रेक्षणीयः।**
**मद्गेहिन्याः प्रिय इति सखे! चेतसा कातरेण**
**प्रेक्ष्योपान्तस्फुरित[3]तडितं त्वां तमेव स्मरामि॥ १०॥**

**तस्यास्तीरे क्रीडाशैलो**ऽप्यस्तीति शेषः। शैलं विशिनष्टि—**पेशलैः** चारुभिः **इन्द्रनीलैर्विहितशिखरः**। सर्वावयवोपलक्षणार्थः शिखरशब्दः। कनकमयीभिः **कदलीभिः वेष्टनेन** हेतुना परभागलाभात् **प्रेक्षणीयश्च** भवति। एवं पूर्वार्धेन शैलसन्निवेशमुक्त्वा तं प्रत्यात्मनः शोकसद्भावमसावप्यवसरे मयानुग्राह्य एवेति तस्य **बुद्धिमुत्पादयितुमाह**—**मद्गेहिन्या** इति। **सखे!** असौ मया सह स्वैरविहारलोलुपाया **मद्गेहिन्याः प्रियः सन्** अद्य मद्विरहास्वस्थया तयोपेक्षितः शोच्यामवस्थां **गतः**। अतः कारणादुपान्तस्फुरिततडितं नीलरुचं त्वां प्रेक्षणादुद्बुद्धसंस्कारोऽहं **कातरेण चेतसा तमेव स्मरामि**। न तु चेतो विषयान्तरं नेतुं शक्नोमीत्यर्थः॥ १०॥

**रक्ताशोकश्चलकिसलयः केसरश्चात्र कान्तः**
**प्रत्यासन्नौ कुरवकवृतेर्माधवीमण्डपस्य।**
**एकः सख्यास्तव सह मया वामपादाभिलाषी**
**काङ्क्षत्यन्यो वदनमदिरां दोहल[4]च्छद्मनास्याः॥ ११॥**

**अत्रोद्याने रक्ताशोकः केसरश्च** स्त इति शेषः। अशोकं **विशिनष्टि**—**चलकिसलयः** मृदुपवनचलितपल्लवतया नयनवल्लभः। अनेन तत्र चण्डमरुतामनवतारः **सूचितः**। केसरं विशिनष्टि—**कान्तः**। सोऽपि न पश्यतां जनानां नयननिकरमन्यतो नेतुमनुमन्यत इत्यर्थः। उद्यानगतयोरनयोर्देशविशेषं दर्शयति—**प्रत्यासन्ना**-

1. Vl. निचित for विहित।
2. Sv. वेष्टित for वेष्टन।
3. Jn. Sd. St. स्फुटिततडितं।
4. Jn. दौहद, Vl. Vs. दोहद।

विति। अथ तयोरेतत्संवत्सरव्यापि कुसुमराहित्यमप्यभिज्ञानतया दर्शयति—**एक** इति। तयोरेकः पूर्वो मया सह वर्तमानायास्तव सख्या मद्भार्याया इति यावत्, वामपादमुष्टिहितालक्तकार्द्रं दोहलच्छद्मनाभिलषति। अन्यो द्वितीयोऽस्या मत्सहिताया एवेत्यर्थः, वदनमदिरां दोहलच्छद्मना काङ्क्षति। पुष्पोद्गमसिद्ध्यर्थमित्युभयत्रापि सिद्ध्यति। अत्र छद्मनेति निर्देशान्नैतत् पारमार्थिकं तयोरपि पुंस्त्वाविशेषादस्मदभिप्राय एव अभिप्रायः सम्भवति। तादात्विकः पुष्पोद्गमोऽपि तदानन्दपुलकोद्गमतया सम्भावित एवेति व्यज्यते ॥ ११ ॥

तन्मध्ये च स्फटिकफलका काञ्चनी वासयष्टि-
मूले बद्धा[1] मणिभिरनतिप्रौढवंशप्रकाशैः।
तालैः शिञ्जद्वलयसुभगै[2]र्नर्तितः[3] कान्तया मे
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद् वः ॥ १२ ॥

तयोर्मध्ये अनतिप्रौढवंशप्रकाशैः बालवेणुनिभैः मणिभिः मरतकैः **मूले बद्धा** कृतवेदिका उपरि स्फटिकफलका काञ्चनी वासयष्टिः अस्तीति शेषः। यस्यासौ वासयष्टिस्तमाह— **तालैरिति** करतालैरित्यर्थः। वः सुहृदिति सोऽवश्यं त्वदभिगमनं नृत्तेन सम्भावयिष्यतीति ध्वन्यते॥ १२ ॥

एवं बहूनि लक्षणान्युक्त्वा तैर्लक्षणीयत्वमगारस्याह—

एभिः साधो! हृदयनिहितैर्लक्षणैर्लक्षयेथा[4]
द्वारोपान्ते लिखितवपुषौ शङ्खपद्मौ च दृष्ट्वा।
क्षामच्छायं भवनमधुना मद्वियोगेन नूनं
सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ॥ १३ ॥

**हृदयनिहितैरिति** काले स्मर्तुं मुहुर्मुहुरनुसन्धातव्यानीत्यर्थः। **द्वारोपान्ते** द्वारपालस्थाने लिखितवपुषौ चित्रार्पितशरीरौ शङ्खपद्मौ च दृष्ट्वा। निधिद्वयाधिदेवतापरौ शङ्खपद्मशब्दौ। इदं तु यक्षभवनत्वमात्रावगमकं लक्षणं न विशेषलक्षणान्तर्भूतमिति लक्षणान्तरेभ्यः पृथक्कृतमिति मन्तव्यम्। अथ भवनान्तरव्यावृत्तं

---

१. Vl. नद्धा।
२. Dk. Ml. St. शिञ्जावलयसुभगैः।
३. Jn. कान्तया नर्तितः।
४. Vl. लक्षणीयं for लक्षयेथाः।

**स्वभवनवर्त्ति** सकलपदार्थगामि तत्कालसम्भावितलक्षणमाह — **क्षामच्छाय-मिति** ॥ १३ ॥

अथास्य स्वभार्यादर्शनोपयुक्ताः प्रवृत्तीरुपदिशति —

**गत्वा सद्यः कलभतनुतां शीघ्रसम्पातहेतोः**
**क्रीडाशैले प्रथमकथिते रम्यसानौ निषण्णः ।**
**अर्हस्यन्तर्भवनपतितां कर्तुमल्पाल्पभासं**
**खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिम् ॥ १४ ॥**

**सद्यः** सम्यगवगमनानन्तरमेव शीघ्रेण [illegible] प्राप्तुं **कलभतनुतां गत्वा** गजप्रेक्षणीयो भवान् शिशुर्भूत्वेत्यर्थः । पूर्वोक्ते क्रीडाशैले **निषण्णः** निषद्य श्रम-मपनीय तत्सम्भावनां च कृत्वेत्यर्थः । [illegible] प्राप्य **विद्युदुन्मेषात्मिकां दृष्टिमल्पाल्पभासं** ईषदुन्मीलितां कुर्वन् भवान् **अन्तर्भवनपतितां कर्तुमर्हसि ।** अल्पत्वपरिमाणं दर्शितं खद्योतालीविलसितनिभामिति । सानुशब्देनैव रम्यत्व उक्ते रम्यत्वविशेषणमाधिक्यं बोधयितुं [illegible] ॥ १४ ॥

अथान्तर्भवनपतितायां दृष्ट्यां [illegible] दृश्यते तां मत्प्रे-यसीं जानीया इत्युत्तरश्लोकपूर्वार्धसमासेन [illegible] —

**तन्वी श्यामा शिखरदशना पक्वबिम्बाधरोष्ठी**
**मध्येक्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः ।**
**श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां**
**या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः ॥ १५ ॥**
**तां जानीयाः परिमितकथां जीवितं मे द्वितीयं**
**दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।**

१. Dk. रत्नसानौ ।
२. A. अल्पावभासं ।
३. A. उत्कलिकां for उन्मीलितां ।
४. Dk. Jn. Ml. Ms. St. शिखरिदशना. Nd. अशिखरदशन ।
५. Vl. प्रेक्षणी ।
६. Jn. विषया ।

तन्वी तनुतरा श्यामा न शुक्ला कृष्णा वा शिखरदशना ।

'पक्वदाडिमबीजाभं माणिक्यं शिखरं विदुः ।'

इति हलायुधः । शिखराख्यमाणिक्यवदस्थूलस्निग्धारुणदन्ती । अधररागवशादारुण्यसिद्धिः । पक्वबिम्बसदृशावधरोष्ठौ यस्या इति विग्रहः । मध्येक्षामा अलुक्समासोऽयम् । अलसशब्देन मान्द्यमुच्यते । एवं रागातिशयात् कांश्चिदवयवान् वर्णयित्वा शेषावयववर्णनामेकयोक्त्या करोति—युवतिविषये युवतिजनमधिकृत्य धातुराद्या उत्तरसृष्टौ दृष्टान्तसम्मता सृष्टिरिव वर्तमाना इति । अनेन धातुस्तदङ्गसृष्टेर्नार्यन्तरसृष्ट्युपयोगित्वोत्प्रेक्षणेन लक्षणकृतां तावत् धातृसम्मतानिर्दोषलक्ष्यदर्शनापेक्षिणां तदङ्गसौष्ठवदर्शनमेव तथात्वविधौ तद्विपर्यये निषेधे वा शरणमित्युक्तं भवति । अस्ति हि विपर्यये निषेधः —

'अतिदीर्घा भृशं ह्रस्वा अतिस्थूला भृशं कृशा ।
अतिगौरा भृशं काली षडेताः वर्जिताः स्त्रियः ॥"

इति । अस्ति च तथात्वविधिः —

'श्लक्ष्णैः स्निग्धैः सितैर्दन्तैः शोभनत्वं च गच्छति ।'

इत्यादि । तस्याः स्वजीवितत्वकथनेन तदपाये स्वापायनिश्चयमाह—मयि दूरीभूते सहचरे दूरीभूते चक्रवाकीमिव वर्तमानामिति । दूरीभूतपदं सप्तम्यन्तेन द्वयेनापि सम्बन्धनीयम् । गाढोत्कण्ठेत्यनन्तरमेवानुवदितुमिदं दृष्टान्तदानम् । एकामिति । इदमपि लक्षणकथनमेव । ईदृशी खल्वाकृतिः सदृशेन केनचित् पुरुषेण सद्वितीयैव सदा भवति । अत एकत्वमपि तद्राहित्यात्मकं दृश्यमानं मत्कलत्रत्वमेव ज्ञापयति इति भावः ॥

एवं तस्याः सहजं लक्षणमुक्त्वा तत्कालसम्भावितमपि क्षामच्छायमितिवल्लक्षणमाह—

गाढोत्कण्ठा विरहदिवसेष्वेषु गच्छत्सु बाला
जाता मन्ये शिशिरमथिता पद्मिनीवान्यरूपा ॥ १६ ॥

मन्ये एषु मासाष्टकवर्तिषु गुरुषु एकैकशोऽतिदीर्घेषु दिवसेषु गच्छत्सु सा बाला क्लेशासहा गाढोत्कण्ठा च सती अन्यरूपैव जाता न तु रूपविका-

1. Ml. Vl. V3. गाढोत्कण्ठां...बालां जातां ... मथितां पद्मिनीं वान्यरूपाम् ।

रमात्रमापन्ना इति। शिशिरमथिता पद्मिनीवेति। अनेन मत्सान्निध्ये पुनरपि कन्दलिता भविष्यतीति ध्वन्यते ॥ १६ ॥

अथ सहजतात्कालिकयोः शोभातदभिभवयोः समावेशमुक्त्वा तस्या मुखे तावद्दर्शयति —

नूनं तस्याः प्रबलरुदितोच्छूननेत्रं प्रियायाः[1]
निःश्वासानामशिशिरतया भिन्नवर्णाधरोष्ठम्।
हस्तन्यस्तं मुखमसकलव्यक्ति लम्बालकत्वा-
दिन्दोर्दैन्यं त्वदनुसरण[2]क्लिष्टकान्तेर्बिभर्ति ॥ १७ ॥

स्पष्टोऽर्थः ॥ १७ ॥

अथ व्यापारानपि तस्यास्तत्कालसम्भवान् लक्षणत्वेन कथयति — आलोक इति त्रिभिः —

आलोके ते निपतति पुरा सा बलिव्याकुला वा
मत्सादृश्यं विरहतनु वा भावगम्यं[3] लिखन्ती।
पृच्छन्ती वा मधुरवचनां[4] शारिकां पञ्जरस्थां
कच्चिद् भर्तुः स्मरसि गिरिके[5]! त्वं हि तस्य प्रियेति ॥ १८ ॥

आसां क्रियाणामन्यतमसंयुक्ता सा प्रायेण आलोके निपतिष्यतीति वाक्यार्थः। 'यावत्पुरानिपातयोर्लट्' इति लट्प्रत्ययः। बलिव्याकुला वा नित्यकर्मणि देवार्चनादौ व्यग्रा वेत्यर्थः। मत्सादृश्यं लिखन्ती वा। सादृश्यं विशिनष्टि — विरहतनु विरहेण कृशम्। पुनरपि विशिनष्टि — भावगम्यमिति। स्वात्मदृष्टान्तेन स्वबुद्धि-परिकल्पितं स्विन्नहस्ततयाश्रुकलुषेक्षणतया च लेखनापरिसमाप्तेनैव लिखित्वा पश्यन्ती इति शतृप्रत्ययेनोच्यते। मन्नामग्रहणाद्विशेषतोऽस्या मधुरवचनां शारिकां शुकीं पृच्छन्ती वा। प्रश्नप्रकारमाह — कच्चिद् भर्तुः स्मरसि इति। न परमिदं तथा-

---

१. Jn. बहूनां for प्रियायाः।

२. Dk. उपगमन, Jn. Vl. उपसरण for अनुसरण।

३. Jn. भाव्यगम्यम्।

४. Jn. मधुरवचनम्।

५. Jn. Ms. Ml. Sd. St. Sv. Vs. रसिके, Ps. सुभगे, Vl. निभृते for गिरिके।

ममात्रमेव स्मरसि, तमपि स्मरस्येव किञ्चिदित्यर्थः। स्मरणनिश्चये कारणमाह — त्वं हि तस्य प्रियेति। पञ्जरस्थामिति। वामप्रकोष्ठनिवेशनं तु विरहिणां न सम्भवतीति भावः ॥ १८ ॥

उत्सङ्गे वा मलिनवसने सौम्य![1] निक्षिप्य वीणां
मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा।
तन्त्रीरार्द्रा[2] नयनसलिलैः सारयित्वा कथञ्चिद्
भूयो भूयः स्वयमधिकृतां मूर्च्छनां विस्मरन्ती ॥ १९ ॥

तामनुशोचति। उत्सङ्गे मलिनवसने वीणां निक्षिप्य नयनसलिलैरार्द्रीभूतास्तन्त्रीश्च वसनाञ्चलादिभिः सारयित्वा शोधयित्वा मद्गोत्राङ्कं मन्नामाङ्कितं यथा भवति तथा विरचितपदं गेयमुद्गातुकामा सती स्वयमधिकृतां मूर्च्छनां रागक्रमं विरहवेदनया मुहुर्मुहुर्विस्मरन्ती वा ॥ १९ ॥

शेषान् मासान् विरह[3]दिवसस्थापितस्या[4]वधेर्वा
विन्यस्यन्ती भुवि गणनया देहलीमुक्त[5]पुष्पैः।
मत्संयोगं[6] हृदयनिहितारम्भमास्वादयन्ती
प्रायेणैते रमणविरहेऽङ्गनानां विनोदाः ॥ २० ॥

विरहदिवसस्थापितस्य विरहप्रथमदिवस एव निरूप्य निर्णीतस्य अवधेः संवत्सरान्त्यदिवसस्य सम्बन्धिनः शेषान् अनतिवाहितान् मासान् देहल्यामलङ्कारार्थतया मुक्तैः पुष्पैः गणनया भुवि विन्यस्यन्ती दिनावयवैः विभज्य गणनया न्यस्यन्तीत्यर्थः। मत्संयोगमिति। वियोगावसानोत्सवदशामिति यावत्। हृदयनिहितारम्भमिति क्रियाविशेषणम्। आरम्भशब्देन तत्कालसम्भावितानि क्रियान्तराण्युच्यन्ते। स्वबुद्धिपरिकल्पितैः क्रियान्तरैरुपबृंहितैः यथा भवति तथा मदागमन-

१. Vl. सोम्य।
२. Ml. Va. तन्त्रीमार्द्राम्।
३. Vl. गमन for विरह।
४. Vl. प्रस्तुतस्य for स्थापितस्य।
५. Ml. Vl. दत्त for मुक्त।
६. Ml. सम्भोगम्।

सुखमास्वादयन्ती वेति वाक्यार्थः । क्रियान्तराणि च ससम्भ्रमोपसरणगाढालिङ्गना-लकोत्सारणाश्रुपरिमार्जनवेणीशिथिलनसान्त्वनसम्मानतादीनि तस्या हृदये सम्भावितानि इति । उक्तव्यापारोपेतत्वकथनं लोकाख्यं प्रमाणं दर्शयति —[illegible]णैत इति ॥ २० ॥

एवमाह्निकव्यापारकथनेनाहस्तस्या आश्वासनकालत्वमुक्तम् । रात्रेरपि तद्योग्यत्वं दर्शयन्नाह—

सव्यापारामहनि न तथा पीडयेद्विप्रयोगः[1]
शङ्के रात्रौ गुरुतरशुचं निर्विनोदां सखीं ते ।
मत्सन्देशैः सुखयितुमलं[2] पश्य साध्वीं निशीथे
तामुन्निद्रामवनि[3]शयनां सौधवातायनस्थः[4] ॥ २१ ॥

अत्राहुः कालादात्रिकाः [illegible] शङ्कया रात्रिर्न वृथा नेतव्या, गतिवशादुपागतः कालः सर्वोऽपि [illegible] कुरु, न त्वहःकालस्य व्यवहाराङ्गतया लोकसिद्धस्य 'आलोके ते निपतति' इत्यादिना च स्वयमुपदर्शितबहु-विधाभिज्ञानस्य निषेधार्थतया इति मन्तव्यम्, अहर्निन्दापरत्वेन तन्निषेधपरत्वस्यानङ्गीकार्यत्वात् । य एते तथाशब्दस्तरप्रत्ययोऽलं सुखयितुमिति अलंशब्दश्च रात्रिप्रशंसां कुर्वन्ति इमेऽहन्यपि पीडाशोकयोः सद्भावं तदपनयने तस्याः सुखसद्भावं च बोध-यन्तोऽहःकालविधानस्याप्युपपादका एव इति रात्रिमुद्दिश्य कथनमपि विशेषतः सायम-तिथेः पूज्यत्वकथनवद् द्रष्टव्यम् । न हि तत्रापि दिवागतोऽतिथिः कथञ्चिद्विलम्बेन सायन्तनः कर्तव्य इति तत्प्रशंसावाक्यस्यार्थो भवति । किञ्च एवंवादिनां निशीथाव-धानदर्शनाद् रात्रिभागान्तरयोरपि निषेधः कल्प्यः स्यात् । न चैवं कल्पयितव्यम् । उत्तरश्लोक एव 'नीता रात्रिः' इति रात्रिपदप्रयोगात् । शाकुन्तले च

'अविनोददीर्घयामा कथं नु रात्रिर्गमयितव्या ।'

---

१. Vl. खेदयेत् for पीडयेत् ।
२. Dk. Ms. Sd. Sr. Sv. मद्वियोगः for विप्रयोगः ।
३. Jn. Vl. अतः for अलम् ।
४. Dk. विरह for अवनि ।
५. Dk. Jn. Ms. Sd. ०शयनां सधवातायनस्थः, Ml. ०शयनां सौधवाता, यनस्थः ।

इत्युक्तत्वात् । तस्मादार्तपरित्राणप्रवृत्तस्य तव निशीथकालोऽपि तदानीमार्त्यतिशयसद्भावाद् ग्राह्य एव । न त्वकालत्वशङ्कया तमुपेक्ष्य मूर्च्छादिदोषान्तरावकाशो दातव्य इत्येवात्र विवक्षितम् । अयं च श्लोकार्थः — [illegible]धारां [illegible]क्रियाकुलत्वायुक्तव्यापारोपेतां ते सखीमहनि विप्रयोगस्[illegible] न पीडयेत् [illegible] न पीडयेत् । रात्रौ तु निर्विनोदां, हेतुगर्भमिदं, [illegible] शङ्के [illegible] । अत्र तस्मादिति शब्दोऽर्थसिद्धो द्रष्टव्यः । मत्सन्देश[illegible] [illegible]नितुं तां निशीथे पश्य वीक्षस्व । साध्वीमिति विशेषणेन

"[illegible] ।
[illegible] ॥"

इति निषेधस्य नेयं विषय [illegible] [illegible]ऽपीति शेषः । अवनिशयनासन्नवातायन[illegible] [illegible] अधिकरणे ल्युट् , आसन्नं यद्वातायनं गवाक्षः [illegible] ॥ २१ ॥

अथ तत्कालसम्भावितं [illegible] — आधिक्षामामिति चतुर्भिः —

आधिक्षामां विरहशयने स[illegible]कपा[illegible]
प्राचीमूले तनुमिव [illegible]शेषां [illegible] ।
नीता रात्रिः क्षण इव [illegible] स[illegible]
तामेवोष्णैर्विरहमहतीमश्रुभिर्यापयन्तीम् ॥ २२ ॥

विरहशयने अवनिशयनं[illegible] । सन्निषण्णैकपार्श्वामिति पार्श्वान्तरपरिवर्तनेऽपि नास्या बुद्धि[illegible] । [illegible]वस्था तस्याः शोभावहैव भवतीति दर्शयन्नाह — प्राचीमूले [illegible] हिमांशोः तनुमिव । अत्र दर्शस्थस्य दर्शनायोग्यत्वाच्चतुर्दशी[illegible] हिमांशोरभिधानमिति द्रष्टव्यम् । कलामात्रशेषामित्यपि कृशामित्येव विवक्षितम् । एवं शयितायास्तस्या निद्राभावः पूर्वश्लोक

१. Ms. Sd. St. विरहजनितैः, Ps. विरहपातितैः ।
२. Vl. संनिकीर्णैकपार्श्वाम् ।
३. Vl. मत्संयोगः कथमुपनमेत्स्वप्नजोऽपीति निद्रामाकाङ्क्षन्ती नयनसलिलोत्पीडरुद्धावकाशाम् ।
४. All other com. except Dk. Ps. and Ml. read क्षणमिव ।

विभक्तैः केशमुष्टिभिरेकत्वेन रज्जुवद् भ्रमणाद् विषमां च इत्यर्थः । करमपि तस्याः पूर्वावस्थाविरहात् पश्यतां जनानां दयाविषय एवं भवतीति द्योतयन् विशिनष्टि — अयमितनखेनेति । अशिक्षितनखेनेत्यर्थः । अस्य वेणीबन्धस्यावधिं दर्शयन्नाह — शापयस्यान्ते मया उद्वेष्टनीयां उद्भूतसान्निवेशं शिथिलीकृत्य मद्भ्यस्तेन प्रकारेण वेष्टनीयामित्यर्थः । विगलितशुचा वियोगदुःखमतिक्रान्तमात्रेण मया सद्य एव इत्यर्थः ॥ २४ ॥

पादानिन्दोरमृतशिशिरान् जालमार्गप्रविष्टान्
पूर्वप्रीत्या गतमभिमुखं सन्निवृत्तं तथैव ।
खेदाच्चक्षुः सलिलगुरुभिः पक्ष्मभिश्छादयित्वा
साभ्रेऽह्नीव स्थलकमलिनीं न प्रबुद्धां न सुप्ताम् ॥ २५ ॥

शङ्करस्य इन्दोः पादान् अमृतमयत्वेन शिशिरान् जालमार्गेणान्तः प्रविष्टान् पूर्वप्रीत्या मत्सन्निधिसमयसम्भृतया प्रीतिवासनया सहसाभिमुखं गतं अथ भुवः खेदात् तथैवाकृतार्थतयैव सन्निवृत्तं चक्षुः सलिलेन बाष्पभरेण गुरुभिः पक्ष्मभिः छादयित्वा न प्रबुद्धां न सुप्तां निमीलनोन्मीलनयोरन्तरालावस्थां प्राप्ताम् । उक्तरूपत्वं तस्य दृष्टान्तेन दर्शयति — साभ्रेऽह्नीति । एवंभूतां तां पश्येति पूर्वयैव क्रियया सम्बन्धः ॥ २५ ॥

एवं सव्यापारामित्यनेन सह पञ्चभिः श्लोकैः क्लेशातिशयवशाद् एवं शयिता सा निशीथेऽपि द्रष्टव्यैव इत्युक्त्वा तवापि तद्दर्शनसमये दुःखवशादवश्यं कोऽप्यवस्थाविशेषो भविष्यतीति पुनरपि क्लेशातिशयं द्योतयन्नाह

सा संन्यस्ताभरणमबला पेलवं[1] धारयन्ती
शय्योत्सङ्गे निहितमसकृद् दुःखदुःखेन गात्रम् ।
[2] त्वामप्यास्रं नवजलमयं मोचयिष्यत्यवश्यं
प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा ॥ २६ ॥

सा एवं शयाना दृश्यमाना न स्वयमेवास्रं मुञ्चति त्वामप्यवश्यं नवजलमयमास्रं मोचयिष्यति । कथंभूता सा इत्यत आह — दुःखदुःखेन गात्रं

१. Ml. Vs. पेशलम् ।
२. All other com. except Dk. and Ps. read अस्रम् ।

धारयन्ती । ईदृशक्लेशभाजनस्य गात्रस्य त्याग एव वरमित्यनुवेलं सञ्चिन्त्य पुनरपि आशया तदपरित्यजन्तीत्यर्थः । दुःखदुःखेनेत्येतद्विवृणोति — शय्योत्सङ्गे असकृत् निहितमिति । अनेन शयनासहत्वेन मुहुर्मुहुरुत्थानं सूचयति । निहितशब्देन शयितुमपि न स्ववशानि स्वाङ्गानीति द्योतयति । अवलाशब्देन मनोदौर्बल्यमुच्यते । पेलवं मृदु । अनेन गात्रमप्यस्याः स्वतः क्लेशासहमेवेति विवक्षितम् । आस्तामेतत् सर्वमेकतः, इयमेव तावदवस्था त्वदनुप्रवर्तनाय पर्याप्ता भवतीत्याह — संन्यस्ताभरणमिति । आभरणशब्देन मङ्गलसूत्रातिरिक्तान्युच्यन्ते । प्रायः सर्व इति । भवतस्त्वविवादसिद्धमेवार्द्रान्तरात्मत्वमिति भावः ॥ २६ ॥

नन्वित्थंभावे तस्याः किं तव प्रमाणम् ; न तावत् प्रत्यक्षाप्तवचने ते, नूनमवश्यमिति शब्दप्रयोगादेव तदभावनिश्चयात् ; नाप्यनुमानं, तद्धि प्रथमविरहं दृष्टान्तीकृत्य द्वितीयावावेव सम्भवति ; उपमानमपि सादृश्यमात्रविषयमिति नास्मिन्नवतरति ; अर्थापत्तिरपि दयितासम्बन्धिनोऽनुपपद्यमानस्यार्थस्यात्रादर्शनान्नैव क्रमते ; अतो जळस्येव सौभाग्याभिमानमात्रविजृम्भितमेतद्दयिताक्लेशातिशयवचनमिति शङ्कामनुरागविषयपूर्वप्रत्यक्षबलादेवास्माभिरुच्यते 'अस्त्येवात्रानुमानं प्रमाणं, सौभाग्यप्रकाशनं तु तं प्रत्येव युज्यते यस्याविसंवादकं प्रमाणं न भविष्यति' इति परिहरन्नाह —

जाने सख्यास्तव मयि मनः सम्भृतस्नेहमस्मा-
दित्थंभूतां प्रथमविरहे तामहं तर्कयामि ।
वाचालं मां न खलु सुभगम्मन्यभावः करोति
प्रत्यक्षं ते निखिलमचिराद् भ्रातरुक्तं मया यत् ॥ २७ ॥

स्पष्टार्थः श्लोकः ॥ २७ ॥

अथ तस्याः स्ववार्ताश्रवणसुखसूचकनिमित्तसम्भावनां श्लोकद्वयेनाह

रुद्धापाङ्गप्रसरमलकैरञ्जनस्नेहशून्यं
प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम् ।
त्वय्यासन्ने नयनमुपरिस्पन्दि शङ्के मृगाक्ष्या
मीनक्षोभाच्चलकुवलयश्रीतुलामेष्यतीति ॥ २८ ॥

१. B. स्पष्टार्थोयम् ।
२. Dk. वामं for शङ्के ।
३. Dk. मध्ये मीनोच्चलकुवलय० ।

रुद्धोपाङ्गे प्रसरो यस्य । अञ्जनस्नेहशून्यमिति अलङ्कारवर्जनादञ्जनेन शून्यं; 'रात्रौ जागरणं रूक्षम्' इत्यायुःशास्त्रविरुद्धया जागरणभुवा रूक्षतया व्याप्तत्वात् स्नेहेन च शून्यमित्यर्थः । 'प्रत्यादेशो निराकृतिः' इत्यमरः । एभिर्विशेषणैर्नयनशोभापगमविषयेऽनुशयः सूचितः । एवमपि मृगाक्ष्या नयनं त्वय्यासन्ने सति उपरिस्पन्दि भूत्वा मीनक्षोभाचलं यत् कुवलयं तेन सह श्रीतुलां शोभासाम्यं एष्यतीति शङ्के इत्यर्थः ॥ २८ ॥

वामश्चास्याः कररुहपदैर्मुच्यमानो मदीयै-
र्मुक्ताजालं चिरविरचितं त्याजितो दैवगत्या ।
सम्भोगान्ते मम समुचितो हस्तसंवाहनानां
यास्यत्यूरुः सरसकदलीस्तम्भगौरश्चलत्वम् ॥ २९ ॥

ऊरुश्च वामश्चलत्वं यास्यतीति सम्बन्धः । अतश्च नयनमपि वाममिति सिद्ध्यति । कररुहपदैर्मुच्यमान इति नखरेखाणां चिरेण तिरोभावं सम्भवतीति मत्वा वर्तमाननिर्देशः कृतः । ऊरुद्वयालङ्कारभूतं मुक्ताजालं त्याजितः । चिरविरचितमिति चिरेण निर्मितमतिसुन्दरमित्यर्थः । अनेन तत्त्यागेऽनुशयातिशयः सूचितः । दैवगत्येति दैवप्रातिकूल्यादित्यर्थः । इदं नयनोरुविषयसकलानुशयोक्तिसाधारणमभिधानम् । सम्भोगान्ते मम हस्तसंवाहनानां समुचित इति । दैवगत्या च तैरपि विहीन इत्यर्थः । सरसकदलीस्तम्भगौर इति सरसशब्देन सेकाविच्छेदं वदता विवृद्धिं लक्षयति । गौरत्वं युवतीनां ऊरुस्तनकपोलेषूज्ज्वलत्ववत् प्रसिद्धमेव ॥ २९ ॥

अनेन प्रियसमागमाव्यभिचारिणा निमित्तेन शापकालसमाप्त्या च

'शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य'

इतिवदितस्ततः संभ्रमतो दत्तदृष्टिं तामेवमुत्थाप्यैवं वक्तुं प्रक्रमेथा इति विवक्षन् निशीथकालस्य पाक्षिकमयोग्यत्वं सपदि स्फुरितं कथयति—

तस्मिन् काले जलद ! यदि सा लब्धनिद्रासुखा स्या-
दन्वास्यैनां स्तनितविमुखो याममात्रं सहस्व ।

१. Vl. वामो वास्याः ।
२. Jn. Ml. Vl. चिरपरिचितम् ।
३. Jn. गर्भ for स्तम्भ ।
४. Vl. दयिता for यदि सा ।
५. Ms. Sd. St. Sv. तत्रासीनः for अन्वास्यैनां ।

मा भूदस्याः प्रणयिनि मयि स्वप्नलब्धे कथञ्चित्
सद्यःकण्ठच्युतभुजलताग्रन्थि गाढोपगूढम् ॥ ३० ॥

सुगमः पूर्वार्धः । प्रणयिनि मयि स्वप्नलब्धे [illegible] नियतभावि यदस्या गाढोपगूढं तत् सद्यःकण्ठच्युतभुजलताग्रन्थिं मा भूदित्युत्तरान्वयः ॥ ३० ॥

एवं याममात्रावच्छिन्नस्य [illegible] कर्तव्यतामुपदिश्य पुनरपि तद्विषयमाश्वासनोत्थापनादिव्यापारजातं पूर्वं विवक्षितं [illegible] —

तामुत्थाप्य [illegible]
प्रत्याश्वस्तां [illegible] ।
विद्युद्गर्भः [illegible]
वक्तुं [illegible] ॥ ३१ ॥

तामिति [illegible] जिज्ञासमानामित्यर्थः । आश्वस्तामुत्थाप्येति सम्बन्धः । [illegible] आश्वासनातिरिक्तस्य उत्थापनव्यापारस्य [illegible] समाश्वस्तामिति । तानि च तत्कालानिलेन [illegible] भावः । त्वत्सनाथे गवाक्षे स्तिमित-नयनां गवाक्षबहिर्देशस्थिते [illegible] । विद्युद्गर्भः तद्दृष्टिविघातासहाय [illegible] स्तनितवचनैः शब्दैः वक्तुं मद्वृत्तान्तवाक्यानि वक्तुं प्रक्रमेथाः । [illegible] मानिनीपदनिर्देशाच्च युवयोर्निशीथे समीपावस्थानं न दोषावहं भवतीति विवक्षितम् । धीरशब्दस्तावत् कविना स्वयमेव कुमारसम्भवे व्याख्यातः

"विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः ।"

इति । मानिनीशब्दोऽप्यभङ्गाभिमानत्वं वदन् तत्कारणभूतमसदाचारवर्जनं स्वार्थे-ऽन्तर्भावयति ॥ ३१ ॥

१. Jn. सखे for मयि ।
२. Jn. प्रोत्थाप्यैनां for तामुत्थाप्य ।
३. Jn. Vl. विद्युद्गर्भे ।
४. Vl. निहितनयनां ।
५. Jn. Sv. स्तनितवचनैः ।

अथ प्रक्रमवाक्यं दर्शयति—

भर्तुर्मित्रं प्रियमविधवे! विद्धि मामम्बुवाहं
तत्सन्देशान्मनसि निहितादागतं त्वत्समीपम्।
यो वृन्दानि त्वरयति पथि श्राम्यतां प्रोषितानां
मन्द्रस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि ॥ ३२ ॥

अविधवे! अनेन प्रथमप्रयोजनमाशीर्वचनं तत्त्वनिवेदनसम्बोधनं च तन्त्रेण कृतम्। मां भर्तुः प्रियं विश्वास्यं मित्रं मनसि निहितात् तत्सन्देशात् कारणात् त्वत्समीपमागतमम्बुवाहं विद्धि। उत्तरार्धेन स्वात्मन ईदृशे कर्मणि अधिकृतत्व-प्रसिद्धिं प्रथमपुरुषप्रयोगेण दर्शयति। यो मन्द्रस्निग्धैः ध्वनिभिः अबलावेणि-मोक्षोत्सुकानि प्रोषितानां वृन्दानि त्वरयति। पथि श्राम्यतामिति विशेषणेन स्ववशानामेव न तु शापाद्यभिभूतानामिति विवक्षितम् ॥ ३२ ॥

अस्य वचनप्रकारस्य फलमाह—

इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा
त्वामुत्कण्ठोच्छ्वसितहृदया वीक्ष्य संभाव्य चैवं।
श्रोष्यत्यस्मात्परमवहिता सौम्य! सीमन्तिनीनां
कान्तोपान्तात् सुहृदुपगमः सङ्गमात् किञ्चिदूनः ॥ ३३ ॥

इत्याख्यात इति अस्मिन् वाक्ये एवमुक्ते सति विशेषेणोन्मुखी उत्कण्ठो-च्छ्वसितहृदया वार्ताश्रवणौत्सुक्याद् विकसितहृदया च भूत्वा सा त्वां प्रसन्नया दृष्ट्या वीक्ष्य मधुरया च गिरा सम्भाव्य अस्मात् त्वद्विज्ञापनरूपाद्वाक्यात् परं वाक्यं मद्वृत्तान्तविज्ञापनरूपं अवहिता श्रोष्यतीत्यर्थः। पवनतनयं मैथिलीवेत्यनेन मेघस्य जितेन्द्रियत्वादिसकलगुणसम्पूर्णत्वं स्वभार्यायाः पतिव्रताग्रेसरत्वं च वदति।

१. Ju. अभिदधे for अविधवे।
२. Jn. Ml. तत्सन्देशैः for तत्सन्देशात्।
३. Ms. Ml. हृदयनिहितैः for मनसि निहितात्।
४. Ps. अध्वगानां for प्रोषितानां।
५. Sd. चैवम्।
६ Jn. Sv. अवहितं for अवहिता।
७. Ms. Sd. St. Vl. Vs. कान्तोदन्तः।
८. Dk. Vl. Vs. सुहृदुपनतः, Ms. Sd. St. सुहृदुपहृतः।

तात्कालिकहृदयोच्छ्वासाविक्यस्य इयत्तां दर्शयति — सीमन्तिनीनामिति। सङ्ग-मात् कान्तस्यागमनात् इत्यर्थः। किञ्चिदून इति किञ्चिदेवेत्यर्थः। त्वगिन्द्रियस्यैव कान्तादन्यत्र निर्व्यापारत्वेन अकृतार्थत्वात् किञ्चिदूनत्वकथनम् ॥ ३३ ॥

किं तर्हि तद्वाक्यं यन्मया श्रावयितव्यमिति जिज्ञासमानं प्रत्याह —

तामायुष्मन्! मम च वचनादात्मनश्चोपकर्तुं[1]
ब्रूया एवं[2] तव सहचरो रामगिर्याश्रमस्थः।
अव्यापन्नः कुशलमबले! पृच्छति त्वां वियुक्तां[3]
पूर्वाशास्यं[4] सुलभविपदां प्राणिनामेतदेव ॥ ३४ ॥

तामिति मद्वृत्तान्तं मद्वाक्यानि च विस्तरेण श्रोतुमवहितां इत्यर्थः। आत्म-नश्चेति तव चेत्यर्थः। उपकर्तुं आशाग्रन्थिं द्रढयितुम्। एवं ब्रूयाः इति। एवंशब्देन 'तव सहचर' इत्यादि 'प्रेमराशीभवन्ति' इत्येवमन्तानां वाक्यानां परामर्शः। अत्र केचिदर्था मध्यस्थवाक्येन वक्तव्याः केचिद्यक्षवाक्येन। तेनोक्तं मम चात्मनश्च वच-नादुपकर्तुमिति। तेषु प्रथमप्रयोज्यानि तद्वाक्यानि तावद्दर्शयति — तव सहचर इत्यादिना श्लोकत्रयेण। सुलभविपदामिति अप्रतीयमाननिमित्तापि विपत्तिर्दृश्यत इति भावः। अत्र तु निमित्तमपि महदस्तीत्याह — वियुक्तामिति ॥ ३४ ॥

अङ्गेनाङ्गं तनु[5] च तनुना गाढतप्तेन तप्तं
सास्रेणास्रद्रुतमविरतोत्कण्ठमुत्कण्ठितेन[6]।
उष्णोच्छ्वासं समधिकतरोच्छ्वासिना[7] दूरवर्ती
सङ्कल्पैस्ते विशति[8] विधिना वैरिणा रुद्धमार्गः ॥ ३५ ॥

1. Vl. आत्मना चोपकर्तुं।
2. Jn. Vl. Vs. ब्रूयादेवं।
3. Jn. नियुक्तः; all other com. except Ps read वियुक्तः।
4. Ml. Ms. Sd. St. Sv. पूर्वाभाष्यं।
5. Ml. Sd. St. Sv. प्रतनु for तनु च।
6. Jn. Vl. अस्रद्रव, Sv. St. अश्रुद्रव, Ml. अश्रुद्रुत, for आस्रद्रुत।
7. Dk. समधिकतरोच्छ्वासिना।
8. All other com. except Ps. and Vl. read सङ्कल्पैस्तैर्विशति।

दैवप्रातिकूल्याद् दूरवर्ती रुद्धमार्गश्च सन्नसौ ते तावकमङ्गं तनुत्वाद्युपलक्षितं अङ्गेन निजेन तथाविधेनैव सङ्कल्पैरुपायैर्विशति प्राप्नोतीति वाक्यार्थः । अधिकतरशब्दोक्तं दीर्घत्वं पूर्वपदस्थमुष्णत्वञ्चोभयमुभयत्रापि द्रष्टव्यम् । इह चशब्दस्य वाक्यार्थसमुच्चयपरत्वं कुशलप्रश्नवत् सङ्कल्पसमागमस्यापि तात्कालिकत्वप्रतीतिप्रसङ्गादुत्तरवाक्ये चशब्दाभावाच्च नादर्तव्यम् ॥ ३५ ॥

एवं मद्वृत्तान्तकथनरूपेण त्वद्वाक्येनोपकृतायां व्याह्रियमाणानि मद्वाक्यानि श्रोतुमुत्सुकायां सत्यां यदुपरितनानां वाक्यानां मद्वाक्यत्वं द्योतयितुं स मन्मुखेनेदमाहेत्येवंरूपं वाक्यं तदप्यनुरागद्योतकमभिज्ञानगर्भमीदृक्कर्तव्यमित्याशयवानाह —

शब्दाख्येयं यदपि किल ते यः सखीनां पुरस्तात्
कर्णे लोलः कथयितुमभूदाननस्पर्शलोभात् ।
सोऽतिक्रान्तः श्रवणविषयं लोचनाभ्यामदृष्ट-
स्त्वामुत्कण्ठाविरचितपदं मन्मुखेनेदमाह ॥ ३६ ॥

यत् किल शब्दाख्येयं शब्देन प्रत्याययितव्यं तत् सखीनां पुरस्तादपि य आननस्पर्शलोभात् ते कर्णे कथयितुं लोलोऽभूत् स लोचनाभ्यामदृष्टः श्रवणविषयञ्चातिक्रान्तः सन् उत्कण्ठाविरचितपदं उत्कण्ठया कर्तृभूतया प्रथितानि पदानि यस्मिन् तत् तथोक्तं इदं वक्ष्यमाणं वाक्यं मन्मुखेन त्वामाह इति योजना ॥ ३६ ॥

इदंशब्दपरामृष्टानि वाक्यानि दर्शयति —

श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं
वक्त्रच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्
हन्तैकस्थं क्वचिदपि न ते चण्डि! सादृश्यमस्ति ॥ ३७ ॥

---

१. Ml. Ms. Sd. St. Sv. Vs. अदृश्यः Vl. अगम्यः for अदृष्टः ।
२. A. omits this word.
३. Vl. हरिणप्रेक्षिते ।
४. Ms. Sd. St. Sv. Vs. दृष्टिपातान् ।
५. Vl. गण्डच्छायां ।
६. Dk. भ्रूपताकां ।
७. Ml. एकस्मिन् for एकस्थं ।
८. Ms. Sd. Sv. Vl. Vs. भीरु for चण्डि ।

अयमर्थः । यदा त्वद्दर्शनाधीनजीवनोऽहं वियोगदुर्दशामविशं तदा प्रभृति त्वत्सादृश्यमेव शरणमनुप्राप्तस्तल्लिप्सया सकलवस्तुसम्पूर्णे महति रामगिरौ पर्यटन् व्रततीषु श्यामासंज्ञितासु अङ्गसादृश्यमात्रमुत्पश्यामि, तिर्यक्षु हरिणीषु दृष्टिसादृश्यमात्रं, शतपत्रेषु मयूरबर्हभारेषु केशसादृश्यं, नदीवीचिषु भ्रूविलाससादृश्यं, हंसेषु गतिसादृश्यं, पिकेषु स्वरसादृश्यं, कदलीषु ऊरुसादृश्यं, गगने शशिनि वक्त्रच्छायां, किं बहुना ? क्वचिदपि गगने भुवि वा त्वत्सादृश्यं एकद्रव्यस्थं नोत्पश्यामि । हन्त! वयं मोघमनोरथाः संवृत्ताः इति । चण्डीति सम्बोधनेन मद्विरहे मा भूदस्य कथञ्चिदपि निर्वृतिरेति मत्वा नूनं त्वयैव इदं त्वत्सादृश्यमितस्ततो निक्षिप्तमित्येवंरूपा चाटूक्तिर्व्यज्यते ॥ ३७ ॥

अथैकस्थं त्वत्सादृश्यमलभमानस्य ममैषा बुद्धिरासीत् समग्रसादृश्यसम्पादनक्षमे चित्रे त्वां कोपप्रसादादिभिर्भावविशेषैः बहुधा विलिख्य तत्र तत्र मामपि प्रणिपातादिव्यापारोपेतमालिख्यावयोरन्योन्यानुरागमखिलमपि पश्येयमिति । तत्राप्यहं दैवविरोधान्मुहुर्मुहुर्भग्नमनोरथः संवृत्त इत्याह

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
आस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालिप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥ ३८ ॥

धातुरागैरिति बहुवचनेन तत्सम्पादनसम्भूतं गिरिसञ्चारक्लेशं सूचयति । शिलायामित्येकवचनेनावयोर्बहुविधरूपद्वन्द्वविलेखनाय पर्याप्तविस्तारा श्लक्ष्णत्वसमत्वगुणयुक्ता शिलाप्येका दुर्लभैव इति द्योत्यते । उक्तरूपां तन्या त्वदालेखनपुरस्सरं मां विलिखितुं यावदिच्छामि इति पूर्वार्धस्यार्थः । चरणपतितं कर्तुमिति तथा विलिखितुमित्यर्थः । यतोऽत्र चिरपरिचितं चित्रकर्मापि सान्तरायं भवति अतस्तस्मिन्नपि आवयोः समागमो धातृसङ्कल्पप्रतिहत एव इत्याह — क्रूर इत्यादिना । अत्र विधातेति वक्तव्ये कृतान्तशब्दग्रहणं जीवनोपायेषु तत्तद्भङ्गकारी सन् नूनमन्तकधर्मा प्राप्तेत्युपालम्भाभिप्रायेण कृतम् ॥ ३८ ॥

---

१. A. दृष्टिसादृश्यं ।
२. Jn. Ml. Vl. Vs. अस्रैः ।
३. Dk, Jn. Ml. आलुप्यते
४. A. आलिखितुं ।

एवं कालयापनव्यापारेषु स्वीयेषु दैवप्रतिहतत्वमुक्त्वा दैवापतिते स्वप्नसमागमेऽपि[1] दैवप्रतीघातप्रकारं तत्पश्यन्तीनां स्थलीदेवतानां व्यसनपरम्परादर्शनाद् दुःखोत्पत्तिं च दर्शयति --

मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो-
लब्धायास्ते कथमपि मया स्वप्नसन्दर्शनेषु ।
पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां
मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति ॥ ३९ ॥

स्वप्नहेतोर्निद्राया दुर्लभत्वात् स्वप्नसन्दर्शनेषु कथञ्चिल्लब्धायास्ते निर्दयाश्लेषहेतोः गाढालिङ्गनलिप्सया आकाशप्रणिहितभुजं निद्राभङ्गहेतुभूतबाहुद्वयोच्छ्रयणव्यापारवन्तं मां पश्यन्तीनां स्थलीदेवतानां अहो ! दैवापतितस्वप्नसमागमोऽप्यस्य दैवादेव भग्नः हन्त! विधातुरलमलमिति निर्बन्धेन इति कारुण्यात्तरुकिसलयेषु मुक्तास्थूलाः अश्रुलेशाः बहुशो न खलु न पतन्तीति । पतन्त्येवेत्यर्थः ॥ ३९ ॥

किं बहुना । इदमेवैकं कादाचित्कं मम जीविताल्म्बनं भवति नान्यत् किञ्चिदस्तीत्याह ---

भित्वा सद्यः किसलयपुटं देवदारुद्रुमाणां
ये तत्क्षीरस्रुतिसुरभयो दक्षिणेन प्रवृत्ताः ।
आलिङ्ग्यन्ते गुणवति ! मया ते तुषाराद्रिवाताः
पूर्वस्पृष्टं[2] यदि किल भवेदङ्गमेभिस्तवेति ॥ ४० ॥

गुणवति ! वेषभाषाशीलवृत्तेषु सकलजनपूजिते ! तवाङ्गं एभिः पूर्वस्पृष्टं यदि किल भवेदिति मत्वा ते तुषाराद्रिवाताः मया आलिङ्ग्यन्ते । तच्छब्दोक्तान् विशिनष्टि — ये दक्षिणेन मार्गेण प्रवृत्ताः । तुषाराद्रिजत्वोक्त्यैव शैत्यमुक्तमिति कृत्वा देवदारुकिसलयपुटभेदनकथनेन तत्क्षीरसम्बन्धकथनेन च मान्द्यसौरभ्ये ॥ ४० ॥

१. A. सङ्गमेऽपि ।
२. All other com. except Dk. P's. Vl. read पूर्वं स्पृष्टं ।

एवं शक्येष्वप्युपायेषु दैवात् प्रतिहतवृत्तितया सीदमानं मे चेतः सहसाशक्यमप्यर्थं अभिधावतीत्याह —

संक्षिप्येत[1] क्षण[2] इव कथं दीर्घयामा त्रियामा[3]
सर्वावस्थास्वहरपि कथं मन्दमन्दातपं स्यात्।
इत्थं चेतश्चटुलनयने! दुर्लभप्रार्थनं मे
गाढोष्माभिः[4] कृतमशरणं त्वद्वियोगव्यथाभिः ॥ ४१ ॥

गाढोष्माभिः त्वद्वियोगव्यथाभिः अशरणं कृतं सन्मम चेतः इत्थं दुर्लभप्रार्थनं भवतीत्यर्थः ॥ ५१ ॥

इत्थमतिक्लिष्टचेतसापि मया भविष्यदमन्दानन्दसन्दोहस्मरणशृङ्खलया लङ्घितवेगाः क्रियन्ते प्राणाः, अतः त्वयापि तथैव कर्तव्यमित्याह —

न[5] त्वात्मानं बहु विगणयन्नात्मना[6] नावलम्बे
तत् कल्याणि! त्वमपि नितरां[7] मा गमः कातरत्वम्।
कस्यात्यन्तं[8] सुखमुपनतं[9] दुःखमेकान्ततो वा
नीचैर्गच्छन्त्युपरि[10] च दशा[11] चक्रनेमिक्रमेण ॥ ४२ ॥

तुशब्देन पूर्वप्रमेयविनिवृत्तिः सूच्यते। आत्मानमात्मनैव न तु नावलम्बे वियोगवेदनया प्रयाणोन्मुखप्राणं मां मयैव निवारयामीत्यर्थः।

'आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः।'

१. Sd. St. Sv. संक्षिप्यन्ते, Vl. संक्षिप्येत।
२. Jn. Ms. St. Sv. Vs. क्षणमिव।
३. Ms. Sd. S. Sv. Vl. Vs. दीर्घयामास्त्रियामाः।
४. Dk. Ps. गाढोष्णाभिः।
५. Jn. St. Vl. नन्वात्मानं, Ms. Sd. Sv. Vs. इत्यात्मानं।
६. Jn. Ml. Ms. Sd. St. Sv. आत्मनैवावलम्बे।
७. All other com. except Dk. Jn. and Ml. read सुतरां for नितरां।
८. Jn. Ml. कस्यैकान्तं।
९. Sd. Vs. उपगतं for उपनतं।
१०. Jn. Dk. गच्छत्युपरि।
११. Jn. Dk. दशा चक्रनेमिक्रमेण।

इतिवत् एकार्थविवक्षया शब्दौ । बहुशब्दार्थः 'तं तमात्माभिलाषम्' इत्यत्र विवृतो भविष्यति । तत् तस्मात् कारणात् कल्याणि! अनेन गुणकीर्तनसाम प्रयुज्यते । नितरामत्यर्थं कातरत्वं मा गमः । प्राणान् धारयितुमशक्ता मा भूरित्यर्थः । त्वमपीत्यपिशब्देन हेतुसाम्यं सूचयति । बहुविगगनशब्दोक्तं भविष्यदानन्दप्राप्तिसद्भावमवस्थान्तरन्यासेन द्रढयति — कस्येति ॥ ४१ ॥

अथ नितरां कातरत्वं मा गम इत्येतच्छेषतया शापावच्छिन्नकालस्य शिष्टस्याल्पत्वं तन्निर्वहणोपायं च कमपि पूर्वार्धेन दर्शयन् उत्तरार्धेन बहुविगणनशब्दोक्तमभिमतमर्थं[1] विवृणोति —

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
[2]शेषान्मासान् गमय चतुरो लोचने मीलयित्वा ।
पश्चादावां विरहगु[3]णितं तं [4]तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥ ४२ ॥

भुजगशयनादुत्थिते हेमन्तारम्भे शेषाननतिवाहितान् नभ आदींश्चतुरो मासान् गमय । अयं चाषाढो गतप्राय इति भावः । लोचने मीलयित्वेति सहिष्णुतयैवेत्यर्थः । पश्चात् दिव्यभावप्रत्यापत्त्या झटिति गगनमार्गेण इमं देशमागम्य अहं त्वन्मनोरथान् अभिलाषान् पूरयिष्यामि । त्वमपि मन्मनोरथान् पूरयिष्यसीति वाक्यार्थः । अभिलष्यत इत्यभिलाषो विषयः । विरहगुणितं विरहकृतादनुपभोगान्मनसि पुञ्जीभूतमित्यर्थः । ननु

"क्षीराब्धौ शेषपर्यङ्क आषाढ्यां संविशेद्धरिः ।
निद्रां त्यजति कार्तिक्यां तयोः सम्पूजयेद्धरिम् ॥"

इति कौर्मवचनविरुद्धमिदं हेमन्तारम्भे मार्गशीर्षमासीत्युत्थानशब्दव्याख्यानम् । नैष विरोधः । कार्तिके प्रबोधः मार्गशीर्षे उत्थानमिति सुपरिहरत्वात् ॥ ४२ ॥

एवमिदंशब्दपरामृष्टानि स्वक्लेशातिशयस्वजीवनसन्धारणविषयाणि वाक्यानि सप्तभिः श्लोकैर्दर्शयित्वा पुनरभिज्ञानवाक्येन जीवनधारणविश्वासं 'स्नेहः प्रवासाश्रयाद्'

---

१. A. शब्दाभिमतमर्थं ।
२. Dk. Jn. Ps. Vl. मासानन्यान् ।
३. Dk. Ml. St. विरहगणितं ।
४. Jn. तमेवाभिलाषं ।

इत्यस्य कौलीनस्याप्रामाण्यकथनेन क्लेशातिशयविश्वासं च पञ्चपादत्रिपादविभक्तेन श्लोकद्वयेनादधाति —

भूयश्चाह त्वमसि शयने कण्ठलग्ना पुरा मे
निद्रां गत्वा किमपि रुदती सस्वरं विप्रबुद्धा ।
सान्तर्हासं कथितमसकृत् पृच्छतश्च त्वया मे
दृष्टः स्वप्ने कितव ! रमयन् कामपि त्वं मयेति ॥ ४४ ॥

एतस्मान्मां कुशलिनमभिज्ञानदानाद्विदित्वा
मा कौलीनादसितनयने ! मय्यविश्वासिनी भूः ।
स्नेहानाहुः किमपि विरहे ह्रासिनस्ते ह्यभोगा-
दिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति ॥ ४५ ॥

आहेति । स मन्मुखेनेति शेषः । त्वं पुरा शयने, अधिकरणे ल्युट् । मे कण्ठलग्ना सती किमपीषन्निद्रां गत्वा सस्वरं रुदती विप्रबुद्धासि । ततः स्वप्नदृष्टमप्यस्य साधारणीप्राप्तिरूपमपराधं जाग्रद्दृष्टो यथाभिधीयते तथाभिधाय क्रीडिष्यामि तावत् किञ्चिदयमवसर इति मत्वा त्वया रोदनकारणमसकृत् पृच्छतो मे पृच्छन्तं मां प्रति कितवेति सान्तर्हासं कथितम् । ततः कितवशब्दसम्बोधनश्रवणोन्नीतसद्भावं मदपराधं असकृत् पृच्छतो मे त्वया त्वं कामप्यरमय इति कथितम् । ततोऽस्य कदाचिदप्यकृतपूर्वस्यापराधस्यावगमागममसकृत् पृच्छतो मे त्वया कथितं रमयन् मया दृष्ट इति । ततः किं त्वयाहं तथा दृष्ट इत्यभिधाय सविषादस्थिते मयि मद्विषादप्रशमनायोच्चैर्हासपूर्वकं स्वप्न इति चान्ते कथितम् । इत्येवमभिज्ञानवाक्यं नेतव्यम् । विदित्वेत्यत्र विद्धीत्येव विवक्षितम्, (न ?) त्वाशब्दाद् द्वयोरपि क्रिययोर्भर्त्रागमननिश्चयोत्पादनं प्रति संहत्यकारित्वनियमेन पौर्वापर्यविवक्षाभावात् । त्वाशब्दस्तु

---

१. Ml. Ms. Sd. St. Sv. Vl. त्वमपि ।

२. Ml. Ms. Sd. Sv. सस्वरं, Vl. सस्वनम् ।

३. Jn. पृच्छतोऽसि, Ps. पृच्छते च for पृच्छतश्च ।

४. Jn. विरहे ह्रासिनस्तेऽप्यभोगात्, Ml. विरहे ध्वंसिनस्ते त्वभोगात्. Ms. St. विरहध्वंसिनस्ते ह्यभोगात्, Sv. Sd. विरहे ध्वंसिनस्ते ह्यभोगात्, Vl. विरहह्रासिनस्ते ह्यभोगात् ।

जिज्ञासाधिक्यकृतः कुशलित्वज्ञापनस्यार्थसिद्धं प्राथम्यमनुवदति न तु प्रत्याययति। एवं वाक्यभेदे सति चशब्दोऽप्युत्तरवाक्ये सिध्यति। कौलीनमाश्रित्य यो मय्यविश्वासः स्नेहमधिकृत्य तत्कर्त्री च माभूरिति। अत्र कौलीनस्य युक्तिहतत्वेन अप्रामाण्यादिति निषेधहेतुरभिप्रेतः। कौलीनमनूद्य युक्तिहतत्वं दर्शयति—स्नेहानाहुरित्यादिना। इष्टे वस्तुनि कलत्रादौ स्नेहाद् विरहे सति किमपी दृष्टासिन आहुरिना इति कौलीनमनूदितं। शेषेण युक्तिहतत्वमुच्यते। हिशब्दो हेतौ ते स्नेहा अभोगादुपचितरसाः सन्तः प्रेमराशीभवन्ति यत इत्यर्थः। रसशब्दो रागपर्यायः स्नेहस्यैवोपरितनीमवस्थां वक्ति। तदुपरितनी प्रेमशब्द इति विवेकः। यस्तूपपन्नस्य स्नेहस्य भोगेन व्ययं करोति तस्यैव तत्पुञ्जीभावासंभवो नेतरस्येति भावः॥ ४४॥ ४५॥

अथाभिहितसकलवक्तव्यो यक्षस्तदानीमपि तूष्णीम्भूतमेव मेघमालक्ष्य भवतस्त्वेवमवस्थानमपि सत्त्वभावप्रयुक्तं प्रवृत्त्यङ्गमेव नास्तामिव प्रत्यादेशपरं भवतीति तं प्रशस्य विशेषेणानुरञ्जयति—

कच्चित् सौम्य! व्यवसितमिदं बन्धुकृत्यं त्वया मे
प्रत्यादेशान्[1] खलु भवतो धीरतां[2] कल्पयामि[3]।
निःशब्दो[4] हि प्रदिशसि जलं याचितश्चातकेभ्यः
प्रत्युक्तं हि प्रणयिषु सतामीप्सितार्थक्रियैव॥ ४६॥

सौम्य इदं मे मत्सम्बन्धि बन्धुकृत्यं त्वया कच्चिद्व्यवसितं कर्तुं निश्चितं व्यवसायमेव द्योतयति तवायमाकृतिरिति सौम्यशब्देन सम्बोधयतोऽभिप्रायः। यः पुनरत्रानुमतिद्योतकवाक्प्रवृत्त्यभावरूपः प्रत्यादेशः तस्माद्धेतोर्धीरताकल्पनं, निश्चलचित्तत्वकल्पनं तु न खलु करोमि। खलुशब्दोऽवधारणे। भवत इत्यस्य विवरणं निःशब्दो हीति। चातकेभ्य इति। अपिशब्दोऽत्र द्रष्टव्यः। तूष्णीमासीनेभ्यो मनुष्येभ्यो वाचैव याच्ञां कुर्वद्भ्यश्चातकेभ्योऽपि त्वं निःशब्द एव प्रदिशसीत्यर्थः। सकलसज्जनसाधारणश्चायं स्वभावो न तवैवेत्याह— प्रत्युक्तं हीति। प्रत्युक्तं क्रियैवेति वदता प्रत्युक्त्यवसरे प्रथमक्षण एव क्रियामारभेरन्निति युक्तं भवति॥ ४६॥

१. Ms. Sd. Sv. Vl. प्रत्याख्यातुं, St. प्रत्यादेष्टुं
२. Ms. Sv. अधीरताम्।
३. Sd. St. Vl. Vs. तर्कयामि।
४. Jn. Vr. निश्शब्दोऽपि।

पुनरपि निश्शङ्कं निष्क्रियं च तमालक्ष्य असौ मत्प्रियकरणानन्तरं स्वचिकीर्षितं कर्तुं मदनुज्ञाप्रतीक्षया वा उक्तिसमाप्तिद्योतकवाक्यस्याश्रवणाद्वात्र तूष्णीमास्त इति मत्वोभयं करोति —

एतत् कृत्वा प्रियमनुचितप्रार्थनावर्त्मनो मे
सौहार्दाद्वा विधुर इति वा मय्यनुक्रोशबुद्ध्या ।
इष्टान् देशान् जलद ! विचर प्रावृषा सम्भृतश्री-
र्मा भूदेवं क्षणमपि च ते विद्युता विप्रयोगः ॥ ४७ ॥

अनुचितप्रार्थनावर्त्मनोऽनभ्यस्तयाच्ञासरणेरित्यर्थः । अनेन उक्तिचातुर्य-भङ्गादिदोषसम्भावनया न मद्वाक्यानां त्वत्प्रवर्तकत्वशक्तिरस्ति, बालरुदितानामिव केवलमवस्थानिवेदनपरत्वमेव भवति इत्युच्यते । प्रवर्तकत्वं तु साक्षात् त्वद्गुणानामेवे-त्याह—सौहार्दाद्वेति । एतत् कृत्वेति । एतन्मे प्रियमापाद्यमास्यैव कृत्वेत्यर्थः । यदा प्रावृट् समागच्छेत् तदैव प्रभृति ये त्वदधीनवर्षा देशास्तान् सर्वानपि विचर । न को-ऽप्यन्तरितव्य इति तृतीयपादेनोच्यते । इतरथा स्वकाले विहिताकरणात् प्रत्यवायो-ऽपि भवेदिति जलदपदेन सम्बोधयतोऽभिप्रायः । उक्तिसमाप्तिद्योतकं वाक्यमाशीर्वचनेन करोति — माभूदिति । एवंशब्देन मीयो वियोगः परामृश्यते ॥ ४७ ॥

अनुदिनमभिनवरूपा सुमनोरमणीव जगति जयतितराम् ।
हरिचरितकाव्यसहभूर्व्याख्यासौ मेघदूतस्य ॥

मन्त्रब्राह्मणसूत्रवित् कृतमतिः शास्त्रे च कौमारिले
कर्ता न्यायसमुच्चयस्य कणिकाव्याख्याप्रणेता कविः ।
उत्पत्तिं त्वघमर्षणप्रवरजाद् गौर्यामृषेरासवान्
कर्तास्याः परमेश्वरो नतशिराः पूज्ये गुरौ शङ्करे ॥

लब्धभवदासभावो भगवति भक्त्याख्यया च भवदासः ।
वादी वेदान्तरतो यस्य पितृव्यः स एष कर्तास्याः ॥

शिवमस्तु ।

# APPENDIX I

## ADDITIONAL AND VARIANT MATTER IN THE SMALLER RECENSION OF SUMANORAMAṆĪ

### *PŪRVASANDEŚA*

*p.* 1. *ll.* 7—8. In the place of the verse सुमनोरमणीव्याख्या etc., the following two verses are seen:

क्रियते मेघव्याख्या नादृश्या न च गता विमानपथम् ।
अथ च विबुधोपभोग्या सुमनोरमणीयमद्भुता जयति ॥

निबन्धनानि सन्तीति नाविधाननिबन्धनम् ।
न ह्यनल्पेषु वृक्षेषु न कल्पकमकल्पयत् ॥

*Śloka* 1.

*p.* 2. *l.* 5. After नान्यः—

अपि च यथैष महिमास्तमयो दिव्यदेशनिवासदिव्यजनसंव्यवहारदिव्यजनान्तर्धानशक्त्याद्याकाशगमनशक्त्याद्यभिभवरूपः कान्ताविरहमावहति न तथा कान्ताविरहस्तामित्यस्तङ्गमितमहिमेति पदमर्थहीनं किं कुर्यात्, शापेनेति च पदं क्व

*l.* 12. After वसतिं चक्रे —

रामगिर्याश्रमेषु इति बहुवचनेन विरहवेदनातिशयादेकत्र चिरमवस्थानाशक्तिः सूच्यते । आश्रमबहुत्वं 'वन्यैः पुंसा' इत्यत्रापि सिध्यति ।

*ll.* 16—21. For प्रबन्धोपोद्घातभूते ......... मन्तव्यम् —

यच्चानभिहितानां यक्षनामविशेषादीनामनभिधाने कारणमुक्तं रसानुपयोगादिति तदप्यनभिहितानां पदानामानन्त्यादवक्तव्यमेव इत्यास्तामेतत् ।

*p. 3. l. 25.* After द्योतयितुं कृतम् —

ननु शापकृतमहिमास्तमयदुःखितस्य तत्तादृशपुण्यदेशनिवासिनोऽपि सतः किमिति सदैव तद्देशोचितव्यापारवैमुख्यमिति शङ्कां निवर्तयितुं कान्ताविरहगुरुणेति शापविशेषणं कृतम् । शापकृतमहिमास्तमयदुःखादधिकं कान्ताविरहदुःखमेव तस्याऽतिसक्तस्य दुःखं गुरुतरमासीत् । ततश्च तद्वेदनोन्मत्तचित्तस्य कथं विशुद्धचित्तजनानुष्ठेयतपश्चर्यादिसम्भव इत्यर्थः ।

*l. 28 – p. 4. l. 4–*

आश्रमविशेषणाभ्यां वासोपयोगितया रम्यत्वं पावनत्वञ्च द्योत्यते । स्निग्धच्छायातरवो येषां इति विग्रहः । अत्र च रामगिरिसमाख्यावचनेन जनकतनयास्नानकथनेन चास्य गिरेश्चिरतरं रामेणाध्युषितत्वं तदा तत्साहचर्यञ्च सूचयता तन्निवासस्य स्थानान्तरेभ्यः पावनत्वातिशय उक्तो भवति ।

*Śloka 2.*

*p. 5. ll. 4–6.*

अथ प्रबन्धार्थबीजमावपति तस्मिन्नद्राविति ।

*ll. 4–11.* For न त्वद्रौ कतिचिन्मासान् नीत्वेति कर्तुरधिकरणमद्रिः ... ... ... न कर्तुः—

नत्वद्रौ कतिचिन्मासान् नीत्वेति कर्तुरधिकरणमद्रिः, स इत्यनेनैवाश्रमाधिकरणत्वप्रतीतेस्तस्मिन्नद्राविति वचनवैयर्थ्यात् । अतः स्वसन्निधौ मेघं ददर्शेत्यस्यार्थस्य सिद्धये कर्माधिकरणमद्रिः ।

*p. 6. ll. 16–19.* For कालपरिच्छेदकानां ... ... यावत् —

सदृशदर्शनादिप्रयासानां वक्ष्यमाणानामेवात्र मासनयनशब्देन विवक्षितत्वात् । ग्रीष्मद्वितीयमास आषाढः । तस्याद्ये दिवसे स्वाभिलषितसमय इत्यर्थः । आश्लिष्टसानुमिति । 'षणु दाने' इत्यस्माद्धातोस्सनोति ददाति सुखमिति व्युत्पत्त्या सुखप्रदेशवाची सानुशब्दः । तत्र निविष्टमिति यावत् । इदं तु विशेषणं मिथस्संव्यवहारादेस्सुखदे प्रदेशे तस्यावस्थानं इति द्योतयितुं कृतम् ।

*l.* 23.

कान्ताविरहगुरुणेत्यनेनास्य विरहसद्भावः तस्यासह्यवेदनत्वं तन्निदानतया कान्तातिसक्तिश्च सूचितम् । तत्त्रयमपि निर्दिशति — अबलाविप्रयुक्तः कामी कनकवलयभ्रंशरिक्तप्रकोष्ठ इति । कामो रागः, अतिशयने मत्वर्थीय इनिप्रत्ययः । अतिसक्त इत्यर्थः । विरहवेदनातिशयजन्मना देहकार्श्येन भूषणादिष्वनादरेण च कनकवलयस्य भ्रंशात् रिक्तः शून्यः प्रकोष्ठो यस्य सः तथोक्तः । वसतिं चक्र इत्यनेन योऽर्थो विवक्षितः सोऽयं विशदीकृतः ।

*Śloka* 3.

The whole commentary on this verse is as follows—

तस्य स्थित्वेति । राजराजस्यानुचरः तस्य पुरः कथमपि स्थित्वा चिरं दध्यौ इत्यन्वयः । कथमपि तरुलताद्यवलम्बनेन स्थित्वा । पुरः इत्यनेनात्यन्तासह्यत्वमुक्तम् । केतकाधानहेतोः केतककुसुमस्याधाने निर्माणे हेतोः । मेघध्वनिश्रवणात् केतककुसुमस्योत्पत्तिः इति प्रसिद्धिः । अन्तर्बाष्पः वेदनासह्यतयान्तर्बाष्पत्वम् । राजराजस्यानुचरः वैश्रवणस्य भृत्यः । मेघालोके सुखिनोऽपि चेतः अन्यथावृत्ति भवति, कण्ठाश्लेषप्रणयिनि जने दूरसंस्थे किं पुनरित्यनेनात्यन्तासह्यता व्यज्यते ।

*Śloka* 5.

*p.* 9. *ll.* 3—4.

ननु महेन्द्रनियुक्तस्सलिलनिषेरुदकमादाय तत्र तत्राभिवर्षन्नसौ मेघः किमसमर्थः एव यक्षनियुक्तमर्थमनुष्ठातुं येन तद्विषयाया यक्षप्रवृत्तेरुन्मादकारित्वमुच्येत, न चोन्मादस्तथाविधस्य युक्तः कल्पयितुं, विरहिजनेष्वदर्शनात् इति शङ्कां निरस्यन्नुत्तरक्रियामाह — धूमज्योतिरिति ।

*l.* 27.

औत्सुक्यात उत्कण्ठातिशयात् ।

*l.* 28.

गुह्यकः गुहायामन्तःपुरे निरतः । अनेन निसर्गसिद्धमौत्सुक्यमिति द्योत्यते ।

*p.* 10. *l.* 2.

कामार्ता इति । अत्रार्तपदेन भ्रान्त इत्युक्तम्, कामेन कारणेन मरणदशासु अष्टमीमुन्मादावस्थां प्राप्ता इत्यर्थः ।

*l. 3.*

चेतनाचेतनेषु प्रणयकृपणाः चेतनाचेतनेष्वविशेषेण प्रार्थनया दीनवृत्तयः । हिशब्दोऽस्यार्थस्य लोकादिषु प्रसिद्धिं सूचयति । अयं श्लोकार्थसंक्षेपः — अचेतन एवायं मेघो नियोज्यतामनुभवति । वृष्ट्यादिव्यापारोऽस्येन्द्रसङ्कल्पाद्वायुकृत एव । अतः कामोन्मादनिबन्धनैतद्विषया यक्षस्य प्रवृत्तिः इति ।

*Śloka 5.*

*p. 10. l. 25* After मन्तव्यम् —

अनेनाद्य मम सङ्कल्पपुरुषार्थापगमस्संवृत्त इति द्योत्यते ।

*p. 11. ll. 2—3.* For मेघेतरे .... ....प्रयोगः —

लब्धकामा तावत् अधिगुणविषया याच्ञा समग्रप्रीत्यालम्बनं भवति; मोघापि सा किञ्चित् प्रीत्यालम्बनमेव । अधमे लब्धकामापि सा प्रीतिलेशस्यापि न गोचरः । अलब्धकामत्वे तु कैव कथेत्यर्थः । अधिगुणो हि केनचिद्याचितस्स्वशक्तिसाकल्ये तावत् सुप्रसन्नस्तदैव तदभिलाषितमापूरयन् न कदाचिदपि तमर्थं पुनरनुभाषेत । तद्वैकल्येऽपि तदेकव्यसनी भूत्वा कालान्तरे महत्तरमुपकरिष्यति । इतरस्य तु तद्वैपरीत्यमिति प्रसिद्धमेतदिति भावः ।

*Śloka 7.*

*p. 11. l. 15.*

पयोदेति सन्तापशान्तिप्रद इत्यर्थः, पयश्शब्देन सन्तापशान्तिमात्रलक्षणात् ।

*l. 28.*

अलकाशब्देन सकलसम्पन्निदानत्वमुक्तम् ।

'अलकामतिवाह्येव वसतिं वसुसम्पदाम् ।'

इत्युक्तत्वात् । यक्षेश्वराणां वसतिरित्यनेन ईश्वरोचितसकलोपभोगशालिदिव्यजनसम्पूर्णत्वमुक्तम् । बाह्योद्यानेत्यादिना तु अपरिभाव्यतमत्वं रमणीयतमत्वञ्चोच्यते ।

*Śloka 8.*

*p. 12.* For *ll. 3—5.*

न केवलं मत्कलत्रपरित्राणैकफलक एव भवतः उद्यमः, किन्तु प्रोषितानां वनितास्सर्वा एव विरहकृच्छ्रादुत्तारिता भवेयुः, ताभिश्च भवान् प्रीत्युत्फुल्लैर्नयनकुवलयैस्तत्र तत्र समाराधितो भविष्यतीत्याह — त्वामारूढमिति ।

*l.* 15. After सन्नद्धे—

त्वयि वर्षादिकं स्वधर्ममनुष्ठातुं उद्युक्ते ।

*Śloka* 9.

*p.* 13. *l.* 1. After तद्द्वयं —

तस्य फलञ्च श्लोकत्रयेण दर्शयति—मन्दं मन्दमिति ।

*l.* 7. For अनुकूलः ··· ··· वामभागस्थितः —

अनुकूलो गन्तव्यदिगभिमुखः पवनो नुदति वामो वामभागस्थितः चातको नदति इत्युभयत्रापि मन्दत्वमाधुर्यविशेषणाभ्यां निमित्तयोः पौष्कल्यं वदति । चशब्देन तयोः परस्परनिरपेक्षयोरेव समुच्चये सति स्वफलाविनाभावं कियद्दूरम इत्युक्तम् ।

*l.* 17.

सगन्धो बन्धुः, इदं वायोरपि विशेषणं, अयमिति च ।

*l.* 18. After द्रष्टव्यः —

यथेदृशी निमित्तसम्पत्तिर्दृश्यते तत्फलसम्पत्तिरपि तादृशी समप्रामेवोत्पश्यामि इति श्लोकत्रयार्थसंक्षेपः ।

*Śloka* 10.

*p.* 14. *l.* 5.

दिवसगणनातत्परामिति सांवत्सरिकातीतानागतदिवसगणनादिव्यापृताम् । एतदपेक्षाबीजमाह — एकपत्नीमिति । पतिव्रतानां तादृशीनां खलु प्रियविरहेष्वीदृशं प्राणनयनमिति वक्ष्यति ।

*Śloka* 11.

*p.* 14. *l.* 22. After तथाविधम् —

प्रास्थानिकं गर्जितं शङ्खपटहादिनिनदोपमानभूतत्वात् श्रवणसुभगम् ।

*Śloka* 12.

*p.* 15. *l.* 16. After मन्व्यमित्याह —

तुङ्गमिति च मेखलासु रघुपतिपदैरङ्कितमिति च आकृत्यैव लोकोत्तरत्वं सूचितं भगवच्चरणविन्यासपवित्रशरीरश्च इत्यर्थः । अथवा पुनरप्याप्रश्ने कारणद्वयाभिधानमिदम् ।

*Śloka 13.*

*p. 16. l. 22.* After श्रवणसुखावहपदप्रथनम् --

तत्रापि मनोव्यापारो निवृत्तचर एवेत्यर्थः ।

*Śloka 14.*

*p. 17. l. 11.* After वाक्यार्थः —

त्वामारूढमित्यत्र यादृशी वनिताकटाक्षविषयत्वापत्तिरुक्ता ततोऽपि सुभगतरं दिव्यवनिताकटाक्षलक्ष्यत्वमारोहसमय एव भवति इत्यनेनोच्यते ।

*l. 14.* After सरसनिचुलात् —

तरुवतसादसाहृतात् । अल्पसारा निचुलादयोऽप्यत्र श्रीरामप्रभावात्सान्द्रच्छाया भवन्ति इत्यर्थः । अनेन सलिलव्ययो न कर्तव्यः इति द्योत्यते ।

*l. 17.* After अवलेपाः

अवलेपमूलाः प्रहाराः तान् परिहरन् दूरगमनेन वर्जयन्नित्यर्थः । अस्खलितोत्थानस्य हि कार्यसिद्धिः इति भावः ।

*Śloka 15.*

*p. 17. l. 24.* After रत्नच्छायेति—

प्रेक्ष्यमेतदिति मङ्गलमङ्गीकुर्वित्यर्थः । आपत्स्यत इति अस्य परिपूर्णावस्थायामिति शेषः ।

*Śloka 16.*

*p. 19. l. 5.* After वाक्यार्थः—

भ्रूविलासानभिज्ञतावचनेन स्वाभाविकविलासालङ्कृतत्वमुच्यते ।

*l. 8.*

लघुगतिः गलितप्रायतोयतया द्रुतगतिर्भूत्वेति वाक्यार्थः ।

*Śloka 17.*

*p. 18. l 15.*

इतः पूर्वमस्मिन् संवत्सरे वर्षाभावाद्दाववह्निनावश्यंभाविनि गिरिवनदाहे ।

*l. 21.* After नीचोऽपीत्यर्थः—

प्रथमशब्देन अवस्थाप्राप्तयोरुपकारप्रत्युपकारयोः अन्यवधानं वदति ।

*l.* 24. After प्राप्ते मित्रे—

मित्रं प्राप्य करिष्यति। मित्रत्वमप्यतन्त्रमेव, शत्रुमप्यर्थितया प्राप्तं अनुगृह्णातीत्यर्थः

*Śloka 18.*

*p.* 20. *l.* 8.

सर्पवेणीसवर्णे मेचकरुचितया स्तनचूचुकसमानवर्णे

'नीलालके मेघचये मेचके स्तनचूचुके।
मण्डले कृष्णसर्पाणां सर्पवेणी निगद्यते॥'

इत्युक्तत्वात्।

*Śloka 19.*

*p.* 20. *ll.* 21—26. For मुहूर्तमिति ··· ··· द्रक्ष्यसि—

तस्मिन् अद्रौ मुहूर्तं यावद्विश्रमलाभं स्थित्वा तोयोत्सर्गान्मालदेशाभिवृष्टस्य तोयस्य तत्प्रीतिसम्पादनाय तत्र तत्र निश्शेषकृताद्वर्षाद्धेतोः द्रुततरगतिः अपेतभारक्लेशतया लब्धवेगातिशयगमनस्तत्परं वर्त्म तीर्णस्सन् उपलविषमे गण्डशैलैः स्थपुटिते विन्ध्यपादे विशीर्णां अत एव गजस्यांगे मस्तके भक्तिच्छेदैर्विरचितां भूतिमिव दर्शनीयां रेवां द्रक्ष्यसीति।

*Śloka 20.*

*p.* 22. *l.* 3. For शक्ष्यति ··· ··· ···इत्यर्थः—

असौ मम मित्रमेव अतस्तस्य मदवज्ञा न सम्भवति इत्यत्राह—रिक्त इति।

*Śloka 21.*

*p.* 22. *l.* 24. After वाक्यार्थः—

लघुपदेन गौरवगुणरक्षणाय मार्गे सर्वत्र वर्षणाय च क्वचिदपि नातिव्ययः कर्तव्य इति द्योत्यते।

*Śloka 22.*

*p.* 23. *l.* 18. After सुरभिते—

इदमपि कालक्षेपहेतुः वक्ष्यमाणस्य सहकारि भवेत् इति भावः।

*Śloka 23.*

*p. 23. l. 27.*

सूचिभिन्नैः सूच्याकारेष्वग्रेषु विकसितैः केतकपुष्पैः पाण्डुच्छायोपवनवृतयो येषां ते तथोक्ताः। अनेन न केवलं उपवनान्येव तत्र त्वदासत्त्या सुमनोभिः सुभगत. राणि भवन्ति, तेषां वृतयोऽपि केतकपरिकल्पितास्सत्यः सुकरकुसुमशालिन्यो भवेयुः इत्युच्यते।

*p. 24. l. 2.* After हलायुधः—

तेषां नीडारम्भैः कुलायनिर्माणकोलाहलैराकुला उत्कम्पिता ग्रामप्रदेशवर्तिनः चैत्यवृक्षा येषां ते एवमुक्ताः। जम्बूप्रचुरास्तत्र वनप्रदेशाः तत्फलानि च वर्षासत्या प्रच्यवन्ते। तेनोक्तं परिणतफलश्यामजम्बूवनान्ता इति। एवं विशेषणत्रयेण वनानां उपवनानां ग्रामप्रदेशानाञ्च रमणीयत्वं वदता जलाशयव्यतिरिक्तस्य सकलस्यापि प्रदेशस्य रमणीयत्वमुक्तम्। जलाशयस्यापि तदाह—कतिपयदिनस्थायिहंसा इति। स्वच्छसलिलकमलाकरवासिनो हि हंसा न वर्षर्तुप्रत्यासत्तिमात्रेण गच्छेयुः पुनरपि कतिचिद्दिनान्यवस्थाय यदा तस्मिन् देशे वृष्टिस्तदैव गच्छेयुः। अतस्त्वत्प्राप्तिसमये जलाशयमलङ्कुर्वन्तस्सन्त्येव तत्र हंसा अनुगच्छेयुश्च भवन्तमित्युभयमनेनोक्तम्।

*Śloka 24.*

*p. 24.* Introduction to the verse—

अथ वेत्रवत्यां पयःपानं, प्रियामुखपानसाधर्म्यकथनेन तत्प्रीतिं मुख्यत्वेन विदधाति—तेषामिति—

*l. 10.* Between इति and अतिमहतः

राजधानीं प्राप्तानां चिरेण खलु फललाभो भवति; अत्र तु।

*l. 11.* After वाराते—

ः स्वादुताप्रसिद्धिं स्मारयति। वेत्रवत्या नद्याश्चलोर्मि अत एव तीरोपान्तभुवा स्तनितेन सुरतोचितेन शब्दविशेषेण सुभगं मनोहरम्। अनेन ससीत्कारमिति मुखविशेषणं लभ्यते। स्वादु तत्पयसः सीत्कारं सभ्रूभङ्गं स्वादु प्रियामुखमिव शोभमानं पास्यतीति यत् इत्यर्थः। चलोर्मिपदस्य नदीविशेषणतया षष्ठ्यन्तपाठेऽप्यूर्मिचलत्पयोगतं सत्तद्विशेषणफलं जनयेत् इति केचित्तथा पठन्ति।

*Śloka 25.*

The whole commentary on this verse is as follows:—

तत्र वेत्रवतीसन्निधौ । विश्रामहेतोः विश्रमार्थम् । नीचैराख्या नीचैः इत्याख्या यस्य तं गिरिं अधिवसेः तत्समागमनमकृत्वा तु गमने तस्य महदप्रियं स्यादित्याह— त्वत्सम्पर्कादिति त्वद्गर्जितश्रवणेन प्रत्या सतया मनसि विपरिवर्तमानादित्यर्थः । पुलकितमिव संजातपुलकमिव । अमुकुलपर पुष्पगन्धैः । नायमप्रकृष्टवन्म्लेच्छजनाश्रयो गिरिः, अतस्तत्रत्यजनवृत्तान्तदिदृक्षया दृष्टिदानं न दोषः भवति इति द्योतयन् विशिनष्टि— य इति । पण्यस्त्रीरतिपरिमलोद्गारिभिः वध्याजनानां रत्यागमनकलमकुसुमादिसौरभमणितसीत्कारादीश्च उद्गमद्भिः शिलावेश्मभिरत्यानां नागरिकाणां यौवनान्युद्दामानि उच्छृङ्खलानि इति पथिकजनद्वारा लो प्रथयतीत्यर्थः ।

*Śloka 27.*

*p. 25.* The whole commentary on the verse is as follows:—

अथ प्रागुदगवस्थितोज्जयिनीप्राप्त्यनुगुण मार्गमुपदेष्टुमुपक्रमते— वक्रः पन्था इति । उत्तराशां प्रस्थितस्य तवोज्जयिनीगमने वक्रः पन्थाः स्यात्, मम कार्यविलम्बश्च भवेत् इति चशब्देन द्योतयन् । तद्द्वयमपि भवतु यतस्त्वयोज्जयिन्याः सौधोत्सङ्गप्रणयविमुखेन न भवितव्यम् इत्याह — सौधोत्सङ्गेति । चशब्दो हेतौ । 'समुच्चयान्वाचयेतरेतरतुल्ययोगिताहेतुषु' इति (निघण्टुः पाणिनेः स्मरणात् । तद्विमुख्य किं स्यादित्यत आह— विद्युद्दामेति । यत्र पौराङ्गनानां स्वनो लोलापाङ्गानि सन्ति । लोचनानि विद्युद्दामस्फुरणेन चकितानि च कृत्वा तेषां न रमसे तर्हि वञ्चितः स्याः जन्मसाफल्यविरहित एव स्याः ।

*Śloka 28.*

*p. 26. l. 3.*

उज्जयिनीं गमिष्यतस्तव मार्गे निर्विन्ध्या नाम नदी भविष्यति, तत्र महत्सङ्गोऽनुभव इत्याह—वीचीक्षोभ इति ।

*l. 10.* After दर्शितावर्तनाभेरिति—

अनेन नीवीशैथिल्यापत्तिर्नाम मदनविकारः सूच्यते ।

*Śloka 29.*

*p. 26. l. 17.* After भविष्यति—

सा त्वद्विषयेणानुरागेण निर्विन्ध्यामप्यभरयति; सा तु त्वया सातिशयं सम्मानयितव्येत्याह—।

*l.* 22.

वेणीभूतेन विरहिणीकेशबन्धरूपेण प्रतनुना तनीयसा सलिलेनान्विता ।

*p.* 23. After भ्रष्टैः—

जीर्णपर्णैः पाकपाण्डुभिः पत्रैः पाण्डुच्छाया पाण्डरवर्णा ।

*p.* 27. *l.* 2 After काश्यम्—

विरहक्लेशं जलशून्यतां च येन विधिना समागमोत्सवेन प्रभूतसलिलवर्षेण च त्यजति स त्वयोपपाद्य एव यतोऽनन्यगतित्वात् त्वयैवोपपाद्य इत्यर्थः । स्थाने खलु तस्यास्त्वामधिकृत्येदृशोऽनुराग इति सुभगेति सम्बोधनेन व्यज्यते ।

*Śloka* 30.

*p.* 27. *l.* 4.

अथावन्तिविषयालङ्कारभूतोज्जयिनीप्राप्तिं विदधानस्तास्य अनितरसाधारणगुणोपपन्नां उपवर्णयति— प्राप्यावन्तीनिति ।

*l.* 9.

अवन्तिविषये खलु कोविदः ग्रामवर्तिनो वृद्धाः सकलजनमनोहारिवत्सराजचरितकथानिबन्धग्रन्थाभ्यासरसिका एव इत्यनेनोच्यते ।

*l.* 11.

श्रीविशालां तत्तद्विशिष्टपदार्थसम्पत्प्रकर्षलक्षणया श्रिया व्याप्ता ।

*l.* 14. After दिवः खण्डमिव—

एकशब्दः प्रधानवाची । कान्तिमदित्यतिशायने तमप् । आभ्यां विशेषणाभ्यामिह खण्डपदोक्ता न्यूनता परिगणायत्तैव , दिव्यदेशोचितभोगसमृद्ध्या तु शोभाविशेषेण वा सातिशयैवेत्युच्यते ।

*Śloka* 33.

*p.* 28. *l.* 23. After धूतोद्यानमिति—

कुवलयशब्दो जलकुसुममात्रोपलक्षणम् । गन्धवतीति महाकालनिकटे काचिन्नदी वहति । तोयेत्यादि । तोयेषु स्वैरं क्रीडित्वा ततो विरतानां युवतीनां स्नानेन स्नानीयसुरभिद्रव्येण तिक्तैः सुरभीकृतैः । 'स्नानीयेऽभिषवे स्नानम्' इति वैजयन्ती । तादृशैर्मरुद्भिर्धूतोद्यानं अविरतोत्कम्पितारामसालावलयितम् ।

*Śloka* 34.

*p.* 29. *l.* 2. After चोक्तम् —

तत्र तदनुरूपफलद्वयावाप्तिं उत्तरश्लोकाभ्यामाह— अप्यन्यस्मिन्निति ।

*l.* 10.

अविकलं शिवलोकावाप्तिलक्षणं फलं लप्स्यसे ।

*Śloka* 35.

*p.* 29 *l.* 22. After लीलावधूतैः

भगवत्प्रीतिहेतोः सविभ्रमं भ्रामितैः ।

*l.* 24 ... रत्नच्छायया खचिताः

चामरदण्डप्रत्युप्तानां रत्नानां छायाभिः खचिताः ।

*Śloka* 36

*p.* 29. *l.* 26

अथ तदङ्गसङ्गितया भगवत्सेवाप्रकारमाह-- पश्चादुच्चैरिति ।

*p.* 30. *l.* 7.

आर्द्रनागाजिनेच्छां सकललोकभयङ्करे प्रचण्डताण्डवे शान्तोद्वेगो धैर्यावलम्बनेन निर्भयस्सन् हर पूरयेति । भवान्या स्तिमितनयनं दृष्टभक्तिरित्यनेन सापि त्वद्भक्त्यतिशयदर्शनेन परितुष्टा सती त्वदनुग्रहे भगवतः त्वरामुत्पादयेदिति ध्वन्यते ।

*Śloka* 37.

*p.* 31. *l.* ...

कस्याञ्चिदिति सर्वत्र सुखसद्भावस्सूचितः । भवनवलभौ कूटाकारे भवने । 'कूटाकारस्तु वलभिः' इति वैजयन्ती । दृष्टे सूर्य इति । कुतूहलनिवृत्तिस्तु तत्र वसतां दिनशतेनापि न भवेदिति भावः ।

*l.* 9. After भवन्तं प्रति—

न विधिपरमिदं वाहयेदिति मद्वचनं किन्तु करिष्यमाणानुवादकमेव इत्यर्थः ।

*Śloka* 39.

*p.* 31. *l.* 11.

सूर्योदयसमये गच्छता त्वया सर्वत्रैवं गन्तव्यमित्याह—तस्मिन् काल इति ।

*Śloka* 34.

*p.* 34. *l.* 20. After हरशशिरुचा—

हरशिरश्चन्द्रचन्द्रिकया ।

*Śloka 45.*

*p.* 31. Before the verse —

अथ चर्मण्वती नाम नदीं गच्छेः इत्याह—।

*p. 35.* The whole commentary on verse 45 is as follows :—

सिद्धद्वन्द्वैरिति । आर्द्रतन्त्रीका वीणा न स्वनतीति मत्वा भगवदाराधनार्थं तत्परिसरवर्तिभिस्सिद्धद्वन्द्वैः वीणाभिर्वीणावद्भिर्जलकणभयान्मुक्तमार्गः । अनेन तद्दर्शन-संभाषणादिना न तव गतिविलम्बसम्भवः इति विवक्षितम् । सुरभितनयानां तत्तद्यज्ञ-सम्बन्धिनां सर्वेषां पशूनामालम्भेन तच्चर्मराशेर्जातां स्रोतोमूर्त्या भुवि परिणतां नद्यात्मना बद्धशरीरां रन्तिदेवस्य राज्ञः कीर्तिं मानयिष्यन् व्यालम्बथाः अवतर । अनेन नद्यु-त्पत्तिकथाप्रस्तावेन रन्तिदेवकृतसकलयज्ञफलप्राप्तिस्स्नानमात्रादनेन स्यादिति द्योत्यते ।

*Śloka 46.*

*p. 35. ll. 5-6*

त्वयि तत्सम्माननं कुर्वति देवा अप्यन्तरिक्षचराः तां भुवो मुक्तागुणत्वेनोत्प्रेक्ष्य वर्णयिष्यन्ति, अहो सत्संगमस्य महिमा इत्याह — त्वय्यादातुमिति ।

*l. 13.*

गगनगतयः सिद्धाद्याः स्थूलेन मध्यस्थेन इन्द्रनीलमणिना सितं भुवो मुक्तागुण-त्वेनोत्प्रेक्ष्यमाणं नूनं दृष्टीरावर्ज्य कुतूहलवशात् नयनान्येकाग्राणि कृत्वा प्रेक्षिष्यन्ते ।

*Śloka 47.*

*p. 35. l. 26.*

नेत्रकौतूहलानां कौतूहलविशिष्टानां नेत्राणामिति यावत् ।

*l. 27.*

पात्रीकुर्वन् नखपदमुखसलिलकणविकिरणमत्र कृञर्थः ।

*Śloka 49.*

*p. 36. l. 23.* After याः सिषेवे —

अनेन भगवत्सेवितत्वकथनेन स्वाभाविकमौपाधिकञ्च तासां पावनत्वमुक्तं भवति।

*Śloka 50.*

*p. 37. l. 9* After कन्यां

तत्तपःप्रभावादेव तस्य पुत्रित्वमापन्नां सगरतनयानां कपिलकोपदहनभस्मीभूतानां स्वर्गसोपानपङ्क्तिं तद्भस्ममात्रस्पर्शेनापि तेषां स्वर्गारोहणोपायभूतां भागीरथीं गच्छेः अवगाहनादिना मङ्गलं सम्पादयितुमुपसर ।

*l. 13.* After भावः —

फेनवत्त्वं विहसनोत्प्रेक्षाबीजम् ।

*Śloka 51.*

*p. 37 l. 22* After संसर्पन्त्या —

स्रोतोवत्तरलतया स्फुरन्त्या ।

*l. 27* After व्योम्न्यवस्थानमुक्तम् —

व्योम्न्यैव स्थित्वा सलिलपाने क्रियमाणे पश्चार्धस्योर्वीभावे दीर्घा छाया न स्यादिति पश्चार्धलम्बीत्युक्तम् । तिर्यगिति क्रियाविशेषणम् । तिरश्चीनो यथा भवति तथा पश्चार्धलम्बी भूत्वेत्यर्थः । एवं स्थित्वा उत्तरकूलपरिसरे सलिलमाददाने तस्मिन नदीमध्यदेशं यावच्छायान्याप्तिसम्भवात् सम्पूर्णोपम्यासिद्धिः । सुरगज इवेत्यनेन 'सर्पवेणिसवर्णे' 'शार्ङ्गिणो वर्णचोरे' इतिवदिह यमुनासमागमवर्णत्वमुत्प्रेक्षाबीजमुक्तम् ।

*Śloka 52.*

*p. 38 l. 1?* After त्रिगयनवृपोद्घातेन

तच्छृङ्गसङ्गिना बहलेन पङ्केनोपमेयाम् ।

*Śloka 53.*

*p. 38. ll. 19–21.*

गिरिराजस्य तस्यापि गिर्यन्तरात् प्रत्युपकारस्त्वं स्यादेव इत्याह — तं चेदिति

*l. 27.* After बाधेत चेत् —

राजचिह्नभूतचामरनाशनात् परो न तस्य बाध इति भावः ।

*p. 39. l. 6.* Before आपन्नार्तीति —

अथवा किमत्र मया वक्तव्यं, परोपकारार्थमेव हि भवादृशां सम्पत्सम्पाद मित्याह — आपन्नार्तीति ।

*Śloka 54.*

*p. 40. l. 7.* After क्रियानिष्फलशब्देन

अर्थानर्थप्राप्तिपरिहारलक्षणप्रयोजनशून्यत्वमुच्यते ।

*Śloka* 55.

*p.* 40. *l.* 9. The commentary on the whole verse is as follows:

तत्र गिरौ परमशिवः स्वकीयां चरणन्यासमुद्रां कस्याञ्चिद् दृषदि भक्तजनानुग्रहार्थं व्यक्तीकुर्वन् नित्यमेव सन्निधत्ते । स त्वयेत्थं समाराधनीय इत्याह— तत्र व्यक्तमिति । श्रधत्सिद्धैरुपहृतबलिमिति कपिलाद्यैरनवरतकृतार्चनम् । अनेन सुज्ञान एवासौ चरणन्यासप्रदेशस्तव इत्युच्यते । एवं कृतं भगवदाराधनं तद्दर्शनद्वारा तत्प्राप्तिलक्षणं मोक्षमपि वक्ष्यतीत्याह — यस्मिन् दृष्ट इति । करणशब्दः कायवाची । 'करणं कारणं कायः' इति वैजयन्ती । पापशब्दः काम्यकर्मणामप्युपलक्षणम् । स्थिरेति । अत्र पदशब्दः पद्यते गम्यत इति व्युत्पत्त्या प्राप्यं परमशिवमाह । गुणशब्दोऽप्यणिमाद्यष्टकमभिधत्ते । यथोक्तम् —

"अणिमादिगुणोपेतं अस्पृष्टपुरुषान्तरम् ।
शुद्धमीश्वरमित्युच्चैस्सार्धचन्द्रं बिभर्ति यः ॥"

इति । स्थिरा नैसर्गिका गुणा यत्र तत्प्राप्तये कल्पिष्यन्ते पर्याप्ता भविष्यन्ति ।

*Śloka* 56.

*p.* 41. *l.* 9.

निर्ह्रादी प्रतिशब्देन दीर्घीभूतः भावी भविष्यति । ननुशब्दोऽवधारणे ।

*Śloka* 57.

*p.* 41. *l.* 19.

यत्तत्क्रौञ्चाख्यस्य महाशिखरस्य मध्यस्थं रन्ध्रम् । भृगुपतिना श्रीपरशुरामेण ।

*ll.* 1–5, For इन्तैवं ……… भविष्यति —

भवान् बलिविमथनाभ्युद्यतस्य विष्णोः तिर्यगायमशोभी श्यामः पाद इव उच्छ्रीयमाणः पादो यदा तिरश्चीनो भवति तदवस्थस्स इव दर्शनीयो भविष्यतीत्यर्थः ।

*Śloka* 58.

*p.* 42. *l.* 12.

कैलासं विशिनष्टि— दशमुखेति । आत्मानं लङ्कां नेतुमिच्छतस्तदुद्धरणप्रवृत्तस्य दशमुखस्य भुजैराकुलीकृतः शिथिलीकृतः प्रस्थसन्धिर्यस्य स तथोक्तः । अनेन मनोज्ञत्वातिशय उक्तः —

"यानि यानि मनोज्ञानि वस्तून्यमरवेश्मनि ।
तानि तानि किलोद्धृत्य लङ्कां नयति रावणः ॥"

इति रावणस्य मनोज्ञवस्तुश्रद्धाप्रसिद्धेः । तामेव मनोज्ञतां विवृणोति—त्रिदशेति । दिव्याङ्गनानां सखीजनसमर्पितां अलङ्कारशोभां प्रियतमसमर्पितानि नखदन्तपदानि च सकौतुकं दिदृक्षमाणानां विशुद्धरजतात्मत्वादादर्शभूतस्येत्यर्थः । अनेन तत्र वसतस्तव तद्दर्शनानुभवेन सफलीकृते नयने भविष्यत इति द्योत्यते । एवं मनोज्ञतया प्रशस्य त्र्यम्बकाट्टहासत्वोत्प्रेक्षणेन अधृष्यतामप्याह — शृङ्गोच्छ्रायैरिति ।

*Śloka 61.*

*p. 44. l. 5.* After उच्यते —

अवश्यं नेष्यन्तीति । अनुभूतचराणि तासां नादृशानि दुर्विलसितानीत्यर्थः ।

*l. 9.* After निर्देशः —

यत्तु ग्रैष्मबाधोक्तिरत्र न सम्भवतीति केनचिदुक्तं तदद्वः सर्वावस्थासु मन्द-मन्दातपत्वस्य दुर्लभताभिधानेन वक्ष्यमाणेन विरुद्धमिति ।

*Śloka 62.*

*p. 45.* The commentary on the whole verse is as follows :—

रम्यपदार्थानुभवातिक्रमणमुक्तं तदत्र कर्तव्यमित्याह — हेमाम्भोजेति । हेमाम्भोजप्रसवीति सलिलस्य गुणातिशयं दर्शयति । बह्वाश्चर्यदिदृक्षया सर्वत्र सञ्चरता त्वया तत्र तत्र वर्षः कर्तव्यः, सलिलविच्छेदे जाते तस्मादेव मानसाद् अक्षय्यसलिलात् पुनः पुनरादानञ्च कर्तव्यमिति जलदपदसम्बोधनेनाददान इति वर्तमानत्वकथनेन च विवक्षितम् । मुखपटशब्देन मस्तकालङ्कारतया बध्यमानः पटोऽभिधीयते । ऐरावतशब्देन स एव अभ्रमातङ्गत्वात् स्नातुं पातुं विसान्यत्तुञ्च समागतेषु त्वया सम्माननीयः, तस्यैव च शुक्लवर्णस्य नीलवर्णेन त्वया शोभा भवेदित्युभयमपि सूचितं भवति । कुर्वन्निति वर्तमाननिर्देशेन यदा यदा सलिलादानं तदा तदा क्षणं क्षणं तत्प्रीणनं कार्यमित्येव विवक्षितम् । धुन्वन्निति अंशुकभूतानि कल्पद्रुमकिसलयानि वर्षाङ्गभूतः सवातै आधु-न्वन्, तदुत्कम्पनेन सर्वतः पताकाश्रियमाचरन्नित्यर्थः । नानाशब्देन रजतमये कैलासे विद्युता पिङ्गलत्वकरणं तत्क्षणमेव जर्जितनर्तितमयूरनिवहबिम्बप्रतिबिम्बैर्वर्णान्तरोज्ज्वल-त्वकरणं गर्जितमनुविदधद्भिर्दरीगृहविनिर्गतैः शरभसिंहनिवहैः सर्वतो मुखरत्वसम्पादन-मेवमादयो व्यापारा गृह्यन्ते ॥

## *UTTARASANDEŚA*

*Śloka 1.*

*p. 46, l. 2.* After दर्शयन् —

सप्तभिः श्लोकैः अलकामुपवर्णयति ।

*Śloka 2.*

*l. 15.* Before पाण्डुतां नीता—

यत्र वधूनां हस्ते लीलाकमलं, अलका बालकुन्दवृक्षस्य पुष्पैरनुविद्धाः 'अलकाश्चूर्णकुन्तलाः' इत्यमरः । आननश्रीः स्वाभाविकी मुखशोभा लोध्रपुष्पपाण्डुतां नीता मनोहरतरा । चूडापाशे बद्धकेशकलापे नवं कुरवकपुष्पम् ।

'पाशः कक्षश्च हस्तश्च कलापार्थाः कचात्परे ।'

इत्यमरः । कर्णे चारु शिरीषपुष्पम् । सीमन्ते समविभक्तस्य केशकलापस्य मध्यरेखायां नीपं कदम्बपुष्पम् ।

*l. 18.* After कर्तव्या —

अन्तिमस्य नीपस्य वर्षसम्बन्धकथनेनैव कमलादीनां यथाक्रमं शरदादिसम्बन्धोऽपि सूचितं इति वेदितव्यम् ।

*Śloka 3.*

*p. 46, l. 19.* For मधुपानप्रकारान्तरमाह —

स्वयौवनसफलीकरणप्रकारमाह ।

*p. 47, l. 6*

आहतेषु ताडितेषु ।

*l. 7.*

कल्पवृक्षप्रसूतं अभिलषितप्रदायिभ्यः समुत्पन्नम् ।

'पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले'

इति वैजयन्ती ।

*ll. 8—9* For शनकैः ··· उक्तः—

गाम्भीर्यं सम्पादयितुमुक्तं— शनकैराहतेष्विति ।

*Śloka 4.*

*p. 7. l. 16.*

प्रियेष्वत्यन्तानुरागविषयभूतेषु स्वभर्तृषु । ह्रीमूढानां लज्जया मौग्ध्येन च युक्तानाम् ।

*l. 19.* After इत्यर्थः —

वैफल्यकथनेनात्र साध्वसमपि सिध्यति ।

*p. 48. l. 2.*

नीवीबन्धोच्छ्वसिताशिथिलं नीवीबन्धस्य यदुच्छ्वसितं, अबुद्धिपूर्वकं श्लथनं तेन शिथिलं श्रोणीचक्राद्विस्रस्तप्रायम् । अनेन प्रियशब्दोक्तं भर्तॄणां अनुरागविषयत्वं विवृतम् । रागादनिभृतकरेष्विति रागादनिभृताः स्वयमेव स्वोचितनखक्षतादि कुर्वाणाः करा येषामित्यर्थः । एवं क्षौमविशेषणेन प्रियजनविशेषणेन च अन्योन्यानुराग उक्तो भवति ।

*Śloka 5.*

*p. 48. l. 9.*

शङ्कास्पृष्टां इव भर्त्सनभयादिव ।

*p. 50. l. 2.* After सभ्रूभङ्गेति —

अत्र विभ्रमाः चापस्थानीयाः, भ्रूभङ्गाः ज्यास्थानीयाः, नयनानि शरस्थानीयानि इति सिध्यति ।

*l. 3.*

अत्र षड्भिः श्लोकैः स्वभवनाभिज्ञानमाह ।

*Śloka 10.*

*p. 15. l. 11.*

'चारौ दक्षे च पेशलम्' इत्यमरः । रत्नान्तरैर्यथाशोभं अनुक्तप्रदेशनिर्माणमप्यर्थादुक्तं भवति ।

*Śloka 15.*

*p. 54. l. 1.*

तन्वी न स्थूला न च वनुतरा ।

*Śloka 17.*

*p. 55. l. 9.*

भिन्नो अन्यत्वमापन्नो वर्णो ययोस्तौ भिन्नवर्णौ, भिन्नवर्णौ अधरोष्ठौ यस्य तत्तथोक्तम् । लम्बालकत्वादसकलव्यक्तीति सम्बन्धः । हस्तन्यस्तं इदमप्यसकलव्यक्तावुपयुज्यते । एवं क्लिष्टकान्ति तस्या मुखमद्य नूनं त्वदनुसरणेन, मेघसंरोधेनेति यावत्. क्लिष्टकान्तेः कलुषितशोभस्येन्दोः दैन्यं दीनभावं बिभर्तीति वाक्यार्थः ।

*Śloka 22.*

*p. 58. l. 19.* For विरहशयने ··· अनुवादकमेतत् —

चतुर्भिरेवंभूतां पश्येति पूर्वक्रिययैव सम्बन्धः । आधिक्षामां वियोगदुःखकृशाम् । विरहशयने विरहसमयोचिते तृणादिमात्रव्यवहिते भूभागे ।

*l. 9.*

अथ तमेव कार्श्यातिशयं सहजशोभानभिभवञ्च दर्शयन्नुत्प्रेक्षते — प्राचीमूले कलामात्रशेषां हिमांशोस्तनुमिव ।

*p. 59. ll. 1– 3.* For नीतेति ······ कल्पप्रायाम् —

नीता रात्रिरिति । मया सार्धं इच्छारतैः स्वेच्छानियमिततत्तत्करणोपचारयुक्तैः सुरतैः कारणैः या रात्रिः क्षणमिव नीता तामेव विरहमहतीं अनया विरहावस्थया कल्पप्रायां उष्णैः अश्रुभिः यापयन्तीम् ।

*Śloka 24.*

*p. 60. l. 3.* For अस्य ········· दर्शयन्नाह —

आद्ये दिवसे स्वयैव कृतस्य वेणीबन्धस्य शिथिलनेऽपि कालं कर्तृविशेषञ्च दर्शयति ।

*Śloka 26.*

*p. 61. ll. 5 – 6.* For आस्तामेतत्....... भवतीत्याह —

आस्तामिदं तद्दुःखातिशयो दृश्यमानस्त्वद्दुःखनिदानं स्यादिति । यत्पुनस्तया स्वयमेव धर्मबुद्ध्या मङ्गलसूत्रातिरिक्तसकलाभरणापाकरणेन कृतं वेषान्तरमात्मनः इदमेव तावत्प्रथमतो दृश्यमानं त्वदासमवर्तनाय पर्याप्तं भवत्येवेत्याह — ।

**Śloka 27.**

*p. 61. l. 20.*

स्नेहो हि विरहक्लेशातिशयस्य निदानं भवति । जानामि च सम्यगेव मत्प्रेयस्या मनो मयि सम्भृतस्नेहमिति । अतोऽनुमानेनास्मिन् प्रथमविरहे तामहमित्थम्भूतां तर्कयामि । न खलु सुभगम्मन्यभावप्रवृत्तमनर्थकमिति मद्वाक्यमवगन्तव्यम् । संवादकश्चास्मिन्नर्थे भवतः प्रत्यक्षमेवाचिरात् भविष्यतीत्यर्थः । तव सख्या इत्यभिधानेन निर्व्याजतया त्वत्समानशीलैवेयमिति ध्वन्यते ।

*Śloka 28.*

*p. 62. l. 1.* For रुद्धो ......... यस्य—

अलकैरागण्डलम्बिभिः कारणैः रुद्धो अपाङ्गे प्रसरो यस्य तत्तथोक्तम् ।

*Śloka 29.*

*p. 62. l. 13.* After त्याजितः —

मुक्ताजालशब्देन ऊरुद्वयालङ्कारभूतरशनालम्बिन्यो मुक्तामाला उच्यन्ते । चिरविरचितमिति बहुशिल्पयुक्तत्वात् चिरेण पर्यवसितनिर्माणमित्यर्थः ।

*l. 16.* For सम्भोगान्ते ............ इति—

सम्भोगेति । प्रतिदिनं सम्भोगावसाने मद्धस्तसंवाहनसुखाभिज्ञ इत्यर्थः ।

**Śloka 32.**

*p. 64. l. 6.*

अविधवे जीवद्भर्तृके ।

*Śloka 35.*

*p. 65. l. 9.*

आयुष्मन्निति आदेहपातं परोपकारैकव्यापाराणां भवादृशामायुः प्रशस्ततमं भवतीति स्तुतिरत्र सम्बोधनेन क्रियते । तामेवं ब्रूया इति सम्बन्धः ।

*l. 14.* After श्लोकत्रयेण —

तव सहचर इत्यनेन यदा सः स्वायत्तचेष्टः तदा कदाचिदप्यपृथग्भूत इति द्योत्यते । तथाभूतस्सन्नपि रामगिर्याश्रमस्थो भूत्वा आश्रमप्रभावादायुःशेषसद्भावाद्वा स्वयमव्यापन्नः त्वामपि कुशलं अव्यापत्तिमेव पृच्छति, यतः प्राणिनामेतदेव कुशलं पूर्वाशास्यम् ।

*Śloka 35.*

*p. 66. l. 3.* After द्रष्टव्यम् —

चकारोऽङ्गविशेषणानां द्वितीयान्तानामन्ते कर्तव्यः ।

*l. 5.* After नादर्तव्यम् —

अस्रद्रुतमिति । अस्रेण सिक्तमित्यर्थः । सङ्कल्पैरिति बहुवचनेन समाधिशैथिल्ये जाते पुनः पुनः सन्दधातीति ध्वन्यते ।

*Śloka 40.*

*p. 68. ll. 13—14.*

अथ त्वदङ्गसङ्गसम्भावनावतो वायूनहमखिलानेव आलिङ्गन् वियोगदहनोद्दीपनदर्शनात् तस्य वार्यतामपि निश्चिन्वानोऽस्मिन्नपि व्यापारे निष्फलयत्नोऽहं संवृत्त इत्याह — भित्वा सद्य इति ।

*l. 20.* After आलिङ्ग्यन्ते —

किलेत्यकार्यदर्शनलभ्यं अङ्गस्पर्शाभावं सूचयति ।

*Śloka 41.*

*p. 69. l. 8.* After भवतीत्यर्थः —

चटुलनयनपदसम्बोधनेन 'रामो राजीवलोचनः' इतिवत्तस्याः सर्वावयवसौन्दर्यमुच्यते । तद्वचनेन च युक्तरूपैवेयं त्वद्वियोगव्यथानां ईदृशी शक्तिरिति द्योत्यते ।

*Śloka 43.*

*p. 70. l. 13.*

भुजगशयनादुत्थिते हेमन्तारम्भे खलु मे शापान्तः, अतः शेषान् अनतिवाहितान् ।

*Śloka 45.*

*p. 72. l. 7.* After इत्यर्थः —

भोगेनैवं ह्यनादिरागनाशो दृश्यत इति भावः ।

*l. 8.* After विवेकः —

वृथा एवं इत्येवंशब्दपरामृष्टानां वाक्यानाम् अत्र समाप्तिः ।

*Śloka 46.*

*p. 72. l. 19.* After प्रत्यादेशः —

'प्रत्यादेशो निराकृतिः' इत्यमरः ।

*Śloka* 47.

*p*. 73. The commentary for the whole verse is as follows:

अनुचितप्रार्थनावर्त्मन इति मघवत्प्रकृतिपुरुषदौत्यकरणविषयत्वात् अनुचितैवेयं प्रार्थनेत्यर्थः । सौहार्दानुक्रोशाभ्यामेतन्मे प्रियं कृत्वेति वचनेन मत्प्रार्थनामतन्त्रीकृत्य त्वद्गतकारुण्यादिवशादेव प्रवर्तमानेन त्वया मद्व्यापारानौचित्यमपि परिहृतं भवतीति स्तुतिर्विवक्षिता । प्रावृषा सम्भृतश्रीरिति आषाढमास्येव मदर्थो व्यापारः कर्तव्यः, प्रावृषि तु सलिलदानाय भुवनतलसञ्चरणमेव करणीयमित्यर्थः ॥

*ll*. 16—23 For अनुदिनं ......... कर्गास्याः

कौमारिलाचार्यवरस्य नाम्ना
वृत्तेन मूर्त्यापि च शङ्करस्य ।
शिष्येण सृष्टा परमेश्वरेण
व्याख्येयमेनां विमृशन्तु सन्तः ॥

## APPENDIX II.

*Index of Quotations in Sumanoramaṇī.*

| Quotation | Source | Author | Page |
|---|---|---|---|
| अतिदीर्घा भृशं ह्रस्वा | सामुद्रिकाशास्त्रम् | ... | ४४ |
| अथ शब्दानुशासनम् | महाभाष्यम् १-१-१ | पतञ्जलिः | ५ |
| अविनोददीर्घयामा | शाकुन्तलम् (?) | .. | ५७ |
| आत्मैव ह्यात्मनो बन्धुः | भगवद्गीता ६-५ | ... | १९ |
| आवेग एव विषये | ... | दिवाकरः | ३१ |
| एकप्रघट्टको | ... | ... | ४ |
| एको न गच्छेदध्वानम् | ... | ... | १४ |
| एतेंशांशकलाः पुंसः | भागवतम् १-३-२८ | ... | १८ |
| कटुतिक्तकषायास्तु | ... | अमरः (?) | १२ |
| करीव सिक्तम् | रघुवंशम् ३-१ | कालिदासः | २३ |
| कुटचो गिरिमल्लिका | अमरकोशः १-४-६६ | अमरः | ८ |
| कृतशुद्धेः क्रमात् | ... | खरनादः | २२ |
| केदारस्येव कोदारः | रामायणम् | ... | ८ |
| क्षीराब्धौ शेषपर्यङ्के | कौर्मपुराणम् | ... | ७० |
| गृहबलिभुङ्नीलकण्ठश्च | अभिधानरत्नमाला २-८८ | हलायुधः | २३ |
| चतुष्पथं चैत्यतरुं | ... | .... | ५८ |
| चापमैन्द्रमनुलोमं | महायात्रा | वराहमिहिरः | १८ |
| चिरं न तत्र स्नातव्यम् | ... | ... | १६ |
| जलमध्ये ऽनावृष्टिः | संहिता (?) | ... | १८ |
| तवास्य नीलोत्पलचारु० | ... | ... | ५ |
| तिर्यग्दन्तप्रहारस्तु | अभिधानरत्नमाला २-६१ | (अमरः!)हलायुधः | ७ |
| दयितास्वनवस्थितम् | कुमारसम्भवम् ४-२८ | कालिदासः | ३१ |
| दैवाद्वृते वरः श्रेष्ठे | अमरकोशः ३-३-१७२ | अमरः | ११ |
| धर्मे चार्थे च कामे च | महाभारतम् | ... | १० |

| Quotation | Source | Author | Page |
|---|---|---|---|
| धर्मो रक्षति | मनुस्मृति | ... | १४ |
| धातुसम्बन्धे प्रत्ययाः | अष्टाध्यायी ३-४-१ | पाणिनिः | ४४ |
| धूपोऽसौ गन्धवासितः | वैजयन्ती १-१-३-२८ | यादवप्रकाशः | २८ |
| न तु भाद्रपदे | महायात्रा | वराहमिहिरः | १३ |
| न स्थातव्यं न गन्तव्यम् | .... | ... | १४ |
| नितम्बः पश्चिम० | वैजयन्ती १-२-१-३६ | यादवप्रकाशः | ३२ |
| नृत्तं गीतं च | .... | हलायुधः (?) | ४१ |
| पक्वदाडिमबीजाभं | .... | ... | ५४ |
| पर्यायोक्तं विना | काव्यप्रकाशः १०-२९ | मम्मटः | ४८ |
| पश्चान्नितम्बः स्त्रीकट्याः | अमरकोशः १-६-६४ | अमरः | ३२ |
| पादाः पर्यन्तपर्वताः | ,, २-३-७ | ,, | २१ |
| पानीयं प्राणिनां प्राणाः | अष्टाङ्गसङ्ग्रहः १-६ | वाग्भटः | ११ |
| पूर्वानुभूतं स्मरता | रघुवंशम् १३-२८ | कालिदासः | ८ |
| प्रत्यादेशो निराकृतिः | अमरकोशः ३-२-३१ | अमरः | ४२ |
| प्राणो वायौ बले | ... | केशवः (?) | १४ |
| बाष्पोऽश्रुण्यम्बु० | वैजयन्ती २-१-१-७९ | यादवप्रकाशः | १५ |
| मनश्शरीरयोस्तापः | .... | ... | ६ |
| यद्यद्विभूतिमत् | भगवद्गीता १०-४१ | ... | १५ |
| यावत्पुरानिपातयोः | अष्टाध्यायी ३-३-४ | पाणिनिः | ५५ |
| रात्रौ जागरणं रूक्षम् | अष्टाङ्गहृदयम् १-७-५५ | वाग्भटः | ६२ |
| राम इत्यभिरामेण | रघुवंशम् १०-६७ | कालिदासः | २ |
| वप्रः पितरि वा नप्त्री | वैजयन्ती २-१-५-१५७ | यादवप्रकाशः | ७ |
| वष्टि भागुरिः | ... | ... | २५ |
| वामाः प्रशस्ताः | योगयात्रा | वराहमिहिरः | १३ |
| विकारहेतौ सति | कुमारसम्भवम् १-५९ | कालिदासः | ६१ |
| विभाषा सपूर्वस्य | अष्टाध्यायी ४-१-३४ | पाणिनिः | १४ |

# APPENDIX III.

## *REFERENCES TO THE VIDYULLATĀ IN THE SUMANORAMAṆĪ*

*Sumanoramaṇī* — *Vidyullatā*

*Sumanoramaṇī*, *P. 2, l. 4.*

कश्चित्तु ग्रन्थनिवेशलिप्सया भित्वा कश्चिच्छब्दमंशाभ्यां समानाधिकृताभ्यां जीवपरमात्मनोरैक्याभिधानमातिष्ठते । तत्तावदीदृशेष्वद्वैतासम्बन्धेषु ग्रन्थेषु सकलरूपनिरूपणस्यैव कर्तुं योग्यत्वान्नाद्रियामहे । चित्पदस्य च ज्ञानवाचिनो जीवाभिधायित्वमद्भुततरम् । तस्माद् ग्रन्थनिवेशं विना मङ्गलविषयमनोवाक्कायव्यापारसद्भाव एवात्राश्रेयः ॥

*Vidyullatā*, *P. 2, l. 15.*

अथ सकलविबुधमहितयशाः कविकुलपरमेश्वरो मेघसन्देशसंज्ञितं रसिकजनरसायनं प्रबन्धमारभमाणः तस्य निष्प्रत्यूहपरिसमाप्त्यादिनिखिलसमीहितसिद्धये विश्वमङ्गलनिदानभवानिदेवताकं मगणमादौ प्रयुञ्जानः 'कं ब्रह्म खं ब्रह्म' इति, 'वह्नीन्द्रोपेन्द्रमित्रेकः' इति, 'काश्चित्तात्मार्कभीधातृवाताः' इत्यादिवचनैः परब्रह्मवाचिना ककारेण चित्तसाक्षिज्ञानमात्रस्वलक्षणजीवप्रतिपादकेन चिच्छब्देन च समानाधिकृताभ्यां जीवेश्वरैक्यमशेषपुरुषार्थमौलिभूतमनुसन्दधानः प्रथमपद्येन वस्तुनिर्देशं करोति कश्चिदित्यादि ॥

*Sumanoramaṇī*, *P. 2, l. 27.*

ये तु कान्ताविरह एवात्र शापविषय इत्याहुः तेषां मतं 'शापदुपकृततनुः', 'शापान्मतङ्गजत्वं प्राप्तः', 'शापेन भृङ्गीभूतः' इत्यादिप्रयोगेषूपकृतत्वादिवत् शापेनास्तङ्गमितमहिमेत्यत्रापि महिमास्तमयस्यैव विषयत्वप्रतीतेर्विरहस्य च कान्ताविरहगुरुणेत्येवमुच्यमानस्य गौरवहेतुत्वमात्रावगमाच्चोपेक्षणीयम् ॥

*Vidyullatā*, *P. 5, l. 2.*

शापस्य भोग्यत्वं नाम फलतः प्रियाविरहरूपात् ॥

*Sumanoramaṇī*, *P. 3, l. 18.*

कश्चित्तु नामविशेषानभिधानं रसानुपयोगात् कृतमिति व्याकृतवान् । तदस्ति तया

*Vidyullatā*, *P. 8, l. 11.*

कश्चिदिति सामान्यनिर्देशो रससंरम्भिकवेस्तदनुपयुक्तयक्षविशेषप्रतिपादने

*Sumanoramaṇī* | *Vidyullatā*

तावद्वक्ष्यमाणानुपयोगः । अस्मिन्नपि वाक्ये निक्षिप्यमाणं देवदत्तादिनामपदं न श्रोतृजनचमत्कारं जनयेदित्यभ्युच्चयत्वेन कृतमिति मन्तव्यम् ॥

तात्पर्याभावं ध्वनयति । यथा रघुवंशे 'मत्तश्शापादवलेपमूलात्' इत्यवलेवप्रकारविशेषानुक्तिः ॥

*P. 3, l. 25.*

यत्तूत्तरश्लोके मासेष्वतीतेष्वित्यनभिधाय मासान् नीत्वेति केचित् तन्न तथा मन्तव्यम्, 'वन्द्यैः पुंसां रघुपतिपदैराङ्कितं मेखलासु' इत्येतद्वाक्यवशादाश्रमबहुत्वस्यैवावगमात् ॥

*P. 8, l. 8.*

मासान्नीत्वा न तु मासेषु गतेषु, निर्विनोदतया दीर्घीभूतानिवानपगच्छतो मासान् विचित्रैरुपायैः कथं कथमपि गमयित्वेत्यर्थः ॥

*P. 4, l. 5.*

यत्तु कान्ताविरहगुरुणेत्यस्य कान्ताविरहोपदेशाचार्येणेति व्याख्यानं तद्विरहस्य शापविषयत्वोपजीवनेन कृतत्वात्तन्निरासेनैव निरस्तं भवति ॥

*P. 3, l. 13.*

कान्ताविरहगुरुणा प्रियतमावियोगोपदेशाचार्येण ॥

*P. 4, l. 6.*

यत्पुनः 'स्वाधिकारप्रमत्तः' इत्यत्राधिकारविशेषानभिधानं रसानुपयोगात् कृतमित्युक्तं तन्नामविशेषानभिधानं रसानुपयोगादितिवदभ्युच्चयत्वेन नेतव्यम् ॥

*P. 3, l. 19.*

स्वाधिकारप्रमत्तः स्वेन आत्मना अङ्गीकृते अधिकारे कार्यधुरायां निधिपालनादौ । अत्रापि विशेषानभिधानं पूर्ववद्रसानुपयोगात् ॥

*P. 4, l. 8.*

यत्पुनरयं ग्रन्थः — 'अनेनैव कान्तातिसक्तिमूलत्वमपि शापस्यावगम्यते अन्यथा तद्विरहविषयत्वानुपपत्तेः शापस्य' इति सोऽपि विरहस्य शापविषयत्वाभावात् प्रलापमात्रमेव ॥

*P. 3, l. 18.*

अनेनैव कान्तातिसक्तिमूलत्वमपि प्रमादस्यावगम्यते । अन्यथा तद्विरहविषयस्यानुपपत्तेः शापस्य ॥

*Sumanoramaṇī*

*P. 4, l. 12.*

यत्पुनः भर्तृपदनिक्षेपस्य प्रयोजनमुक्तं– भर्तुरिति निग्रहानुग्रहेऽपि शक्तस्यैतावता क्रोधनिवृत्तिर्महान् लाभ इति द्योत्यत इति– तदप्ययुक्तमेव । निग्रहविशेषनियामकेन यथापराधदण्डत्वेन गुणेनान्वितस्य वैश्रवणस्य निग्रहान्तरेच्छासम्भवात् ॥

*P. 4, l. 16.*

यत्तु महात्मनोऽपि यक्षस्य महिलासङ्गातिशयादनर्थपरम्परापतिता, अतो विषयेष्वतिसक्तिरनर्थाय, 'विनोदमात्रमेवेदमिति यस्यावधारणा विटवृत्तं स जानाति' इत्युक्तया नीत्या वर्तमानो न क्वचिदवसीदति इति ज्ञाप्यत इत्यादिप्रयोजनकथनं तेन कृतं तत्सकलं ग्राम्यमेव । असाधारणप्रयोजनासम्भवे काव्यमात्रसम्बन्धिनां प्रयोजनानां विद्यमानत्वात् ॥

*P. 5. l. 26.*

कश्चित्तु 'शब्दानुशासनम्' इति 'तवास्य नीलोत्पलचारुचक्षुषो मुखस्य तद्रेणुसमानगन्धिनः' इति च शास्त्रे काव्ये च प्रयोगदर्शनात् समासे गुणभूतस्यापि परामर्शः क्रियत इति क्लेशकृतोऽयं परामर्श इति व्याचष्टे । तद्व्याख्यानं स्वशब्दसाहित्यकृतं विशेषमनवधाय कृतमित्युदाहृतवाक्यद्वयानुसन्धानादेव सुबोधमिति नादर्तव्यम् ॥

*Vidyullatā*

*P. 5, l. 6.*

भर्तुरिति, निग्रहान्तरेऽपि शक्तस्य एतावता क्रोधनिवृत्तिर्महालाभः, अप्रतिविधेयत्वादिति द्योत्यते ॥

*P. 6, l. 22.*

अतो विषयेष्वतिसक्तिरनर्थाय, 'विनोदमात्रमेवेदमिति यस्यावधारणा विटवृत्तं स जानाति' इत्युक्तरीत्या वर्तमानो न क्वचिदवसीदतीति ॥

*P. 7, l. 20.*

तच्छब्देन प्रकृतः समासे गुणीभूतो रामगिरिः परामृश्यते । 'अथ शब्दानुशासनं, केषाम्' इति 'तवास्य नीलोत्पलचारुचक्षुषो मुखस्य तद्रेणुसमानगन्धिनः' इति च शास्त्रे काव्ये चैवं प्रयोगदर्शनात् ॥

| *Sumanoramaṇi* | *Vidyullatā* |
| --- | --- |
| *P. 6, l. 19.* | *P. 8, l. 20.* |
| कश्चिदत्र सुहृदालिङ्गनसमाधिरित्याह । तदयुक्तम् । कविबुद्धौ गिरिमेघयोरचेतनत्वेनासुहृद्भावात् । 'आपृच्छस्व प्रियसखमालिङ्ग्य' इति तु ध्यक्षबुद्ध्या वक्ष्यति ॥ | अत्र सुहृदालिङ्गनसमाधिः ॥ |
| *P. 7, l. 20.* | *P. 9, l. 19.* |
| यत् पुनः अस्य प्रियामिति शेषः इति व्याख्याति तदयुक्तम् । ध्यानविषयीकृतस्यार्थान्तरस्योत्तरश्लोक एव दर्शयिष्यमाणत्वात्, अस्य सार्वकालीनत्वेन स्थिरयानन्तर्भावाच्च । तथा च वक्ष्यति 'अङ्गेनाङ्ग सङ्कल्पैर्विशति ' इति ॥ | दध्यौ, प्रियामिति शेषः ॥ |
| *P. 12, l. 22.* | *P. 18, l. 15.* |
| केचित्तु अन्योऽपि यः पुमान् पराधीनवृत्तिः स्वात्मवैधर्म्येणोदाह्रियत इत्याहुः । तत्र तावद्व्यवहितान्वयो भवति । अपिशब्दोऽपि न संबध्येत । साधर्म्ये हि गुणक्रियासामान्यैरपिशब्दप्रयोगो भवति, न वैधर्म्ये । 'रामः शुक्लः कृष्णोऽपि कृष्णः', 'रामः शेते कृष्णोऽप्यास्ते' 'प्रथमो रामो ब्रह्मः द्वितीयतृतीयावपि क्षत्रियौ' इत्यसंभवात् ॥ | अन्योऽपि यः पुमान् अयं जन इव पराधीनवृत्तिर्न स्यात्, अहं यथा अनतिक्रमणीयेन स्वामिना परतन्त्रः, एवं परतन्त्रता यस्य नास्ति स इति वैधर्म्योदाहरणमेतत् ॥ |
| *P. 21, l. 1.* | *P. 34. l. 8.* |
| कश्चित्तु 'तोयोत्सर्गेण कृतेन गलितगौरवतया शीघ्रतरगमनः' इति तोयोत्सर्गस्य द्रुततरगतिसिद्धिमेव प्रयोजनमभिहितवान् । | तोयोत्सर्गद्रुततरगतिः । तदनुग्रहाय तत्र प्रयुक्तेन वर्षेण गलितगौरवतया शीघ्रतरगमनः ॥ |

*Sumanoramaṇi*

तदयुक्तम् । 'अद्रेः शृङ्गं' इत्यत्र तोयपूर्णस्यापि स्वरूपाच्छादनक्षमवेगसम्पादनशक्तेरुक्तत्वात् । किञ्च अनन्तरभाविनोयादानविधिविरुद्धश्चैतद्व्याख्यानम् । तथा हि— पूर्वमुभयत्र वृष्टिं विहितवता यक्षेण स्वेनैव कारितस्य तोयोत्सर्गस्यानेन श्लोकेन द्रुततरगतिलाभे प्रयोजने कथिते सत्युत्तरश्लोके द्रुतत्वविरुद्धं तोयादानविधानं न घटते । न च वाच्यं तोयमादायेति तोयादानं प्रत्यनुमितिरेवात्र क्रियते न विधिरिति । विध्यभावे 'अन्तस्सारम्' इत्यादानप्रशंसानन्वयप्रसङ्गात् । तस्माद्वदान्यताप्रवृत्तिभङ्गापादकं रिक्तावस्थायामर्थिनः दृश्यत्वं परिहर्तुं द्रुतगत्यादिविशिष्टनदीप्राप्तिविधानमेवैतत् । न तु शीघ्रतरगतिविधानमात्रपरमिति ॥

*Vidyullatā*

*P. 22, l. 27.*

यद्यपि 'सारङ्गः शबलो वर्णश्चातकः षट्पदो मृगः ।' इत्यत्र सारङ्गशब्दस्य गजवाचित्वं न दृष्टं, तथापि 'त्वन्निष्यन्दोच्छ्वसिते'ति, 'करीव सिक्त'मिति च गजानां जलसिक्तमहीगन्धप्रियत्वं वदता कविनात्राप्युर्वीगन्धाघ्राणेन गजा एव सारङ्गशब्देनोक्ता इति मन्तव्यम् ॥

*P. 36, l. 21.*

घ्राणे तु सारङ्गा गजा इति केचित् । 'करीव सिक्तं पृषतैः पयोमुचां शुचिव्यपाये वनराजिपल्वलम्' इत्युक्तत्वात् । अत्र प्रमाणं मृग्यम् ॥

*P. 66, l. 3.*

इह चशब्दस्य वाक्यार्थसमुच्चयपरत्वं कुशलप्रश्नवत् सङ्कल्पसमागमस्यापि तात्कालिकत्वप्रतीतिप्रसङ्गादुत्तरवाक्ये चशब्दा- [illegible] ॥

*P. 151, l. 14.*

अङ्गेनाङ्गमिति । चकारः कुशलप्रश्नसमुच्चयार्थः ॥

# APPENDIX IV.

## VERSES NOT COMMENTED UPON IN SUMANORAMAṆĪ.

I

Jn 76, Ml 77, Ms 7[illegible], Sd 76, St 78, Sv 80, Vs 78.

अक्षय्यान्तर्भवननिधयः प्रत्यहं रक्तकण्ठै-
रुद्गायद्भिर्धनपतियशः किन्नरैर्यत्र सार्धम् ।
वैभ्राजाख्यं विबुधवनितावारमुख्यासहाया
बद्धालापा बहिरुपवनं कामिनो निर्विशन्ति ॥

II

Sd 18, Sv 18, Vs 18.

अध्वक्लान्तं प्रतिमुखगतं सानुमानाम्रकूट-
स्तुङ्गेन त्वां जलद ! शिरसा वक्ष्यति श्लाघ्यमानः ।
आसारेण त्वमपि शमयेस्तस्य नैदाघमग्निं
सद्भावार्द्रः फलति न चिरेणोपकारो महत्सु ॥

III

Ml 22, Ms 22, Sd 23, St 22, Sv 23, Vs 23.

अम्भोबिन्दुग्रहणचतुरांश्चातकान् वीक्षमाणाः
श्रेणीभूताः परिगणतया निर्दिशन्तो बलाकाः ।
त्वामासाद्य स्तनितसमये मानयिष्यन्ति सिद्धाः
सोत्कम्पानि प्रियसहचरीसम्भ्रमालिङ्गितानि ॥

IV

Jn 69, Ml 71, Ms 69, Sd 70, St 70, Sv 71, Vs 72.

आनन्दोत्थं नयनसलिलं यत्र नान्यैर्निमित्तै-
र्नान्यस्तापः कुसुमशरजादिष्टसंयोगसाध्यात् ।
नाप्यन्यस्मात्प्रणयकलहाद्विप्रयोगोपपत्ति-
र्वित्तेशानां न च खलु वयो यौवनादन्यदस्ति ॥

V

Jn 118, Ml 119, Ms 120, Sd 121, St 119, Sv 120, Vs 121.

आश्वास्यैवं प्रथमविरहोदग्रशोकां सखीं ते
शैलादाशु त्रिनयनवृषोत्खातकूटान्निवृत्तः।
साभिज्ञानप्रहितकुशलैस्तद्वचोभिर्ममापि
प्रातः कुन्दप्रसवशिथिलं जीवितं धारयेथाः ॥

VI

Vs 127.

इत्थंभूतं सुरचितपदं मेघदूताभिधानं
कामक्रीडाविरहितजने विप्रयोगे विनोदः।
मेघस्यास्मिन्नतिनिपुणताबुद्धिभावः कवीनां
नत्वार्यायाश्चरणकमलं कालिदासश्चकार ॥

VII

Jn 68, Ml 78, Ms 73, Sd 72, St 74, Sv 75, Vl 70, Vs 75.

गत्युत्कम्पादलकपतितैर्यत्र मन्दारपुष्पैः
पत्रच्छेदैः कनककमलैः कर्णविभ्रंशिभिश्च।
मुक्ताजालैः स्तनपरिसरच्छिन्नसूत्रैश्च हारै-
र्नैशो मार्गः सवितुरुदये सूच्यते कामिनीनाम् ॥

VIII

Ms 124, Sd 124, St 122, Sv 123, Vs 124

तत्सन्देशं जलधरवरो दिव्यवाचा चचक्षे
प्राणस्तस्या जनहितरतो रक्षितुं यक्षवध्वाः।
प्राप्योदन्तं प्रमुदितमनाः सापि तस्थौ स्वभर्तुः
केषां न स्यादभिमतफला प्रार्थना ह्युत्तमेषु ॥

IX

Ms 123, Sv 125, Vs 125.

तस्मादद्रेर्निगदितुमथो शीघ्रमेत्यालकायां
यक्षागारं विगलिततनिभं रुद्धचिह्नैर्विदित्वा।

यत्सन्दिष्टं प्रणयमधुरं गुह्यकेन प्रयत्नात्
तद्गेहिन्याः सकलमवदत्कामरूपी पयोदः ॥

X

Ms 111, Sd 112, Sv 111, Vs 112.

धारासिक्तस्थलसुरभिणस्त्वन्मुखस्यास्य बाले !
दूरीभूतं प्रतनुमपि मां पञ्चबाणः क्षिणोति ।
घर्मान्तेऽस्मिन् विगणय कथं वासराणि व्रजेयु-
र्दिक्संसक्तप्रविततघनव्यस्तसूर्यातपानि ॥

XI

Jn 78, Ml 35, Ms 33, Sd 69, St 67, Sv 69, Vs 69.

पत्रश्यामा दिनकरहयस्पर्धिनो यत्र वाहाः
शैलोदग्रास्त्वमिव करिणो वृष्टिमन्तः प्रभेदात् ।
योधाग्रण्यः प्रतिदशमुखं संयुगे तस्थिवांसः
प्रत्यादिष्टाभरणरुचयश्चन्द्रहासव्रणाङ्कैः ॥

XII

Jn. 32, Ml 34, Ms 35, Sd 35, St 33, Sv 34, Vs 35.

प्रद्योतस्य प्रियदुहितरं वत्सराजोऽत्र जह्रे
हैमं तालद्रुमवनमभूदत्र तस्यैव राज्ञः ।
अत्रोद्भ्रान्तः किल नलगिरिः स्तम्भमुत्पाट्य दर्पा-
दित्यागन्तून् रमयति जनो यत्र बन्धूनभिज्ञः ॥

XIII

Jn 75, Ml 73, Ms 71, Sd 78, St 72, Sv 78, Vs 73.

मन्दाकिन्याः सलिलशिशिरैः सेव्यमाना मरुद्भि-
र्मन्दाराणामनुतटरुहां छायया वारितोष्णाः ।
अन्वेष्टव्यैः कनकसिकतामुष्टिनिक्षेपगूढैः
संक्रीडन्ते मणिभिरमरप्रार्थिता यत्र कन्याः ॥

## XIV

Jn 70, Ml 70, Ms 74, Sd 75, St 76, Sv 77, Vs 81

यत्रोन्मत्तभ्रमरमुखराः पादपा नित्यपुष्पा
हंसश्रेणीरचितरशना नित्यपद्मा नलिन्यः ।
केकोत्कण्ठा भवनशिखिनो नित्यभास्वत्कलापा
नित्यज्योत्स्नाः प्रतिहततमोवृत्तिरम्याः प्रदोषाः ॥

## XV

Jn 77, Ml 80, Ms 78, Sd 81, St 80, Sv 82, Vs 80.

वासश्चित्रं मधु नयनयोर्विभ्रमादेशदक्षं
पुष्पोद्भेदं सह किसलयैर्भूषणानां विकल्पान् ।
लाक्षारागं चरणकमलन्यासयोग्यं च यस्या-
मकः सूते सकलमबलामण्डनं कल्पवृक्षः ॥

## XVI

Ms 125, Sd 125, St 123, Sv 124, Vs 126.

श्रुत्वा वार्तां जलदकथितां तां धनेशोऽपि सद्यः
शापस्यान्तं सदयहृदयः संविधायास्तकोपः।
संयोज्यैतौ विगलितशुचौ दम्पती हृष्टचित्तौ
भोगानिष्टानविरतसुखं भोजयामास शश्वत् ॥

## XVII

Jn 83, Ml 33, Ms 32, Sd 34, St 36, Sv 33, Vs 34.

हारांस्तारांस्तरलगुटिकान् कोटिशः शङ्खशुक्तीः
शष्पश्यामान् मरकतमणीनुन्मयूखप्ररोहान् ।
दृष्ट्वा यस्यां विपणिरचितान् विद्रुमाणां च भङ्गान्
संलक्ष्यन्ते सलिलनिधयस्तोयमात्रावशेषाः ॥

# APPENDIX V

*Concordance of he ses n eghasandeśa**

| Śloka | Dakṣiṇāvartanāth | Jinasena | Mallinātha | Mahimasiṃhagaṇi | **Parameśvar** | Pūrṇasarasvatī | Sāroddhāraṇī | Sarasvatītīrtha | Sumativijaya | Vallabhadeva | Viśvanātha |
|---|---|---|---|---|---|---|---|---|---|---|---|
| अक्षय्यान्तर्भवन• | 0 | 76 | 77 | 75 | **0** | 0 | 76 | 78 | 80 | 0 | 78 |
| अङ्गेनाङ्गं | 98 | 107 | 108 | 108 | **98** | 98 | 109 | 108 | 108 | 99 | 109 |
| अद्रेः शृङ्गं | 14 | 14 | 14 | | **14** | 14 | 14 | ... | 14 | 14 | 14 |
| अध्वक्लान्तं | 0 | 0 | 0 | 0 | **0** | 0 | 18 | 0 | 18 | 0 | 18 |
| अन्यस्मिन् | 34 | 36 | 38 | 38 | **34** | 34 | 38 | 38 | 38 | 34 | 38 |
| अम्भोबिन्दु• | 0 | 0 | 22 | 22 | **0** | 0 | 23 | 22 | 23 | 0 | 23 |
| आद्ये बद्धा | 87 | 96 | 98 | 97 | **87** | 87 | 95 | 95 | 98 | 85 | 98 |
| आधिक्षामां | 85 | 94 | 95 | 93 | **85** | 85 | 96 | 97 | 96 | 87 | 96 |
| आनन्दोत्थं | 0 | 69 | 71 | 69 | **0** | 0 | 70 | 70 | 71 | 0 | 72 |
| आपृच्छस्व | 12 | 12 | 12 | 12 | **12** | 12 | 12 | ... | 13 | 9 | 10 |
| आराध्यैनं | 45 | 47 | 49 | 49 | **45** | 45 | 49 | 49 | 49 | 45 | 49 |

* The Ślokas in the Uttarasandeśa are numbered continuous with the Pūrvasandeśa.

Concordance of the verses in Meghasandeśa — (Contd.)

| Śloka | Dakṣiṇāvartanātha | Jinasena | Mallinātha | Mahimasiṁhagaṇi | Parameśvara | Pūrṇasarasvatī | Sāroddhāraṇī | Sarasvatītīrtha | Sumativijaya | Vallabhadeva | Viśvanātha |
|---|---|---|---|---|---|---|---|---|---|---|---|
| आलोके ते | 81 | 90 | 91 | 91 | **81** | 81 | 92 | 91 | 92 | 82 | 92 |
| आश्वास्यैवं | 0 | 118 | 119 | 120 | **0** | 0 | 121 | 119 | 120 | 0 | 121 |
| आसीनानां | 52 | 54 | 56 | 56 | **52** | 52 | 56 | 56 | 56 | 52 | 56 |
| इत्थम्भूतं | 0 | 0 | 0 | 0 | **0** | 0 | 0 | 0 | 0 | 0 | 127 |
| इत्याख्याते | 96 | 105 | 106 | 106 | **96** | 96 | 107 | 106 | 0 | 97 | 107 |
| उत्पश्यामि त्वयि | 59 | 61 | 63 | 63 | **59** | 59 | 63 | 63 | 63 | 59 | 63 |
| उत्पश्यामि द्रुतं | 22 | 22 | 23 | 23 | **22** | 22 | 24 | 23 | 24 | 22 | 24 |
| उत्सङ्गे वा | 82 | 91 | 92 | 92 | **82** | 82 | 93 | [illegible] | 93 | 83 | 93 |
| एतत्कृत्वा | 110 | 120 | 121 | 122 | **110** | 110 | 123 | 121 | 122 | 111 | 123 |
| एतस्मान्मां | 108 | 117 | 118 | 119 | **108** | 108 | 120 | 118 | 119 | 109 | 120 |
| एभिः साधो ! | 76 | 88 | 86 | 86 | **76** | 76 | 87 | 86 | 87 | 77 | 87 |
| कच्चित्सौम्य ! | 109 | 119 | 120 | 121 | **109** | 109 | 122 | 120 | 121 | 110 | 122 |
| कर्तुं यच्च | 11 | 11 | 11 | 11 | **11** | 11 | 11 | ... | 12 | 12 | 12 |
| कश्चित्कान्ता- | 1 | 1 | 1 | 1 | **1** | 1 | 1 | 1 | 1 | 1 | 1 |

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| मच्छन्तीर्ना | 37 | 39 | 41 | 41 | **37** | 37 | 41 | 41 | 41 | 37 | 41 |
| गत्युत्कम्पाद्० | 0 | 68 | 78 | 73 | **0** | 0 | 72 | 74 | 75 | 70 | 75 |
| गत्वा चोर्ध्वं | 58 | [illegible] | 62 | 62 | **58** | 58 | 62 | 62 | 62 | 58 | 62 |
| मत्वा सद्य: | 77 | 89 | 87 | 87 | **77** | 77 | 88 | 87 | 88 | 78 | 87 |
| गम्भीराया: | 40 | 42 | 44 | 44 | **40** | 40 | 44 | 44 | 44 | 40 | 44 |
| कक्षोपान्त: | 18 | 18 | 18 | 18 | **18** | 18 | 19 | 18 | 19 | 18 | 19 |
| ज्ञातं वंशे | 6 | 6 | 6 | 6 | **6** | 6 | 6 | [illegible] | 6 | 6 | 6 |
| ज्ञाने सख्या | 90 | 99 | .00 | 00 | **90** | 90 | 99 | 99 | .01 | 90 | .00 |
| आलोकूर्णै: | 32 | 34 | 36 | 36 | **32** | 32 | 36 | 34 | 36 | 32 | 36 |
| व्यांतिर्लेखा | 44 | 46 | 48 | 48 | **44** | 44 | 48 | 48 | 48 | 44 | 48 |
| तत्र व्यक्तं | 55 | 57 | 59 | 59 | **59** | 59 | 59 | 59 | 59 | 55 | 59 |
| तत्र स्कन्दं | 43 | 45 | 47 | 47 | **43** | 43 | 47 | [illegible] | 47 | 43 | 47 |
| तत्रागारं | 71 | 80 | 81 | 81 | **71** | 71 | 82 | 81 | 82 | 72 | 82 |
| तत्रावश्यं | 61 | 63 | 65 | 65 | **61** | 61 | 65 | 65 | 64 | 61 | 65 |
| | 0 | 0 | [illegible] | 24 | **0** | 0 | .24 | .22 | .23 | 0 | .24 |
| | 75 | 87 | 85 | 85 | **75** | 75 | 86 | 85 | 86 | 76 | 86 |
| तन्वी श्याम | 78 | 83 | 88 | 88 | **78** | 78 | 89 | 88 | 89 | 79 | 89 |
| सं चेद्यायौ | 53 | 55 | 57 | 57 | **53** | 53 | 57 | 57 | 57 | 53 | 57 |
| तस्मादस्मै: | 0 | 0 | 0 | 23 | **0** | 0 | 0 | 0 | .25 | 0 | .25 |
| | 50 | 52 | 54 | 54 | **50** | 50 | 54 | 54 | 54 | 50 | 54 |
| जकद्। | 93 | [illegible] | .03 | 03 | **93** | 93 | 94 | .03 | 04 | 94 | 04 |
| का:के नयन० | 39 | 41 | 43 | 43 | **39** | 39 | 43 | 43 | 43 | 39 | 43 |

Concordance o[f] Meghasan[deśa] Contd.

| Ślo[ka] | Dakṣiṇāvartanātha | Jinasena | Mallinātha | Mahimasiṁhagaṇi | Parameśvara | Pūrṇasarasvatī | Sāroddhāraṇī | Sarasvatītīrtha | Sumativijaya | [V]allabhadeva | Viśvanātha |
|---|---|---|---|---|---|---|---|---|---|---|---|
| तस्मिन्नद्रौ | 2 | 2 | 2 | 2 | **2** | 2 | 2 | | 2 | 2 | 2 |
| तस्य स्थित्वा | 3 | 3 | 3 | 3 | **3** | 3 | 3 | | 3 | 3 | 3 |
| तस्याः किञ्चित् | 41 | 43 | 45 | 45 | **41** | 41 | 45 | 45 | 45 | 41 | 45 |
| तस्यास्तिक्तैः | 20 | 20 | 20 | 20 | **20** | 20 | 21 | 20 | 20 | 20 | 21 |
| तस्यास्तीरे | 73 | 82 | 83 | 83 | **73** | 73 | 84 | 83 | 84 | 74 | 84 |
| तस्याः पातुं | 51 | 53 | 55 | 55 | **51** | 51 | 55 | 55 | 55 | 51 | 55 |
| तस्योत्सङ्गे | 63 | 65 | 67 | 67 | **63** | 63 | 67 | 67 | 67 | 63 | 67 |
| तामायुष्मन् ! | 97 | 106 | .07 | 07 | **97** | 97 | 108 | .07 | 107 | 98 | .08 |
| तामुत्तीर्य | 47 | 49 | 51 | 51 | **47** | 47 | 51 | 51 | 51 | 47 | 51 |
| तामुत्थाप्य | 94 | 103 | .04 | 04 | **94** | 94 | 105 | 04 | 105 | 95 | .05 |
| तां कस्याञ्चित् | 38 | 40 | 42 | 42 | **38** | 38 | 42 | 42 | 42 | 38 | 42 |
| तां चावश्यं | 10 | 9 | 10 | 10 | **10** | 10 | 10 | ... | 10 | 11 | 11 |

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| सो चामीया: | 79 | 84 | 89 | 89 | 79 | 79 | 90 | 89 | 90 | 80 | 90 |
| तेषां दिक्षु | 24 | 24 | 25 | 25 | 24 | 24 | 2 | 25 | 26 | 24 | 26 |
| त्वन्निष्यन्द॰ | 42 | 44 | 46 | 46 | 42 | 42 | 46 | 46 | 46 | 42 | 46 |
| त्वय्यादातुं | 46 | 48 | 50 | 50 | 46 | 46 | 50 | 50 | 50 | 46 | 50 |
| ेवय्यापत्तं | 16 | 16 | 16 | ... | 16 | 16 | 16 | 16 | 16 | 16 | 16 |
| त्वामारूढं | 8 | 8 | 8 | 8 | 8 | 8 | 8 | ... | 8 | 8 | 8 |
| त्वामालिख्य | .01 | .10 | 11 | .12 | 01 | 01 | 13 | 11 | .12 | 02 | 113 |
| त्वामासार॰ | 17 | 17 | 17 | 17 | 17 | 17 | 17 | 17 | 17 | 17 | 17 |
| दीर्घीकुर्वन् | 31 | 31 | 32 | 34 | 34 | 33 | 33 | 32 | 35 | 31 | 31 |
| धारासिक्त॰ | 0 | 0 | 0 | 11 | 0 | 0 | 12 | 0 | 11 | 0 | 112 |
| धूमज्योतिः | 5 | 5 | 5 | 5 | 5 | 5 | 5 | | 5 | 5 | 5 |
| न [illegible]त्मानं | 05 | 14 | .15 | .15 | 105 | 05 | 17 | 15 | .15 | 06 | 117 |
| निश्वासेन | 86 | 95 | 97 | 94 | 86 | 86 | 97 | 96 | 97 | 88 | 97 |
| नीचैराख्यं | 25 | 25 | 26 | 26 | 25 | 25 | 27 | 26 | 27 | 25 | 26 |
| नीपं दृष्ट्वा | 21 | 21 | 21 | 21 | 21 | 21 | 22 | 21 | 22 | 21 | 22 |
| नीवीबन्धो॰ | 67 | 73 | 74 | 70 | 67 | 67 | 73 | 73 | 76 | 69 | 74 |
| नूनं तस्याः | 80 | 85 | 90 | 90 | 80 | 80 | 91 | 90 | 91 | 81 | 91 |
| नेत्रा नीताः | 68 | 74 | 75 | 79 | 68 | 68 | 77 | 75 | 79 | 68 | 76 |
| पश्चादुच्चैः | 36 | 38 | 40 | 40 | 36 | 36 | 40 | 40 | 40 | 36 | 40 |
| पत्रश्यामा | 0 | 78 | 35 | 33 | 0 | 0 | 69 | 37 | 69 | 0 | 69 |
| पाण्डुच्छाया | 23 | 23 | 24 | 24 | 23 | 23 | 25 | 24 | 25 | 23 | 25 |
| पादन्यास॰ | 35 | 37 | 39 | 39 | 35 | 35 | 39 | 39 | 39 | 35 | 39 |

## *Concordance of the verses in Meghasandeśa*—(Contd.)

| Ślo | Dakṣiṇāvartanātha | Jinasena | Mallinātha | Mahimasiṁhagaṇi | Paramesvara | Pūrṇasarasvatī | Sāroddharaṇī | Sarasvatītīrtha | Sumativijaya | Vallabhadeva | Viśvanātha |
|---|---|---|---|---|---|---|---|---|---|---|---|
| पादानिन्दोः | 88 | 97 | 96 | 98 | 88 | 88 | 98 | 98 | 99 | 89 | 99 |
| प्रत्यासन्ने | 4 | 4 | 4 | 4 | 4 | 4 | 4 | ... | 4 | 4 | 4 |
| प्रद्योतस्य | 0 | 32 | 34 | 35 | 0 | 0 | 35 | 33 | 34 | 0 | 35 |
| प्राप्यावन्तीन् | 30 | 30 | 31 | 31 | 30 | 30 | 32 | 31 | 32 | 30 | 32 |
| प्रालेयाद्रेः | 57 | 59 | 61 | 61 | 57 | 57 | 61 | 61 | 61 | 57 | 61 |
| ब्रह्मावर्तं | 48 | 50 | 52 | 52 | 48 | 48 | 52 | 52 | 52 | 48 | 52 |
| भर्तुः कण्ठच्छविः | 33 | 35 | 37 | 37 | 33 | 33 | 37 | 37 | 37 | 33 | 37 |
| भर्तुर्मित्रं | 95 | .4 | .05 | 105 | 95 | 95 | 106 | 05 | 106 | 96 | .06 |
| भित्त्वा सद्यः | 103 | .13 | .13 | 114 | .03 | 03 | 115 | 13 | .14 | 04 | .16 |
| भूयश्चाह | 107 | 116 | .17 | 118 | .07 | 07 | 119 | 17 | .18 | 08 | .19 |
| मत्वा देवं | 70 | 79 | 79 | 80 | 70 | 7 | 80 | 79 | 81 | 71 | 79 |
| मन्दं मन्दं | 9 | 10 | 9 | 9 | 9 | 9 | 9 | | 9 | 10 | 9 |

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| मन्दाकिन्याः | 0 | 75 | 73 | 71 | **0** | .0 | 78 | 72 | ?8 | **0** | 73 |
| मार्गं मत्तः | 13 | 13 | 13 | 13 | **13** | 13 | 13 | ... | 11 | 13 | 13 |
| धामाकाश॰ | .02 | .11 | .12 | 13 | **.02** | .02 | 14 | 12 | 13 | 03 | 14 |
| यत्र स्त्रीणां | 69 | 67 | 76 | 76 | **69** | 69 | 79 | 77 | 73 | 67 | 77 |
| यत्रोन्मत्त॰ | 0 | 70 | 70 | 74 | **0** | 0 | 75 | 76 | 77 | 0 | 81 |
| यस्यां यक्षाः | 66 | 72 | 72 | 77 | **66** | 66 | 71 | 71 | 74 | 66 | 71 |
| ये संरम्भोत्पतन॰ | 54 | 56 | 58 | 58 | **54** | 54 | 58 | 58 | 58 | 54 | 58 |
| रक्ताशोक॰ | 74 | 86 | 84 | 84 | **74** | 74 | 85 | 84 | 85 | 75 | 85 |
| रत्नच्छाया॰ | 15 | 15 | 15 | ... | **45** | 15 | 15 | .. | 15 | 15 | 15 |
| स्वल्पापाङ्ग॰ | 91 | .00 | 01 | 01 | **91** | 91 | 02 | 01 | 02 | 92 | 02 |
| वक्रः पन्थाः | 27 | 27 | 28 | 28 | **27** | 27 | 29 | 28 | 29 | 27 | 29 |
| वापी चास्मिन् | 72 | 81 | 82 | 82 | **72** | 72 | 83 | 82 | 83 | 73 | 83 |
| वामश्चास्याः | 92 | 01 | .02 | 02 | **92** | 92 | .03 | 02 | .03 | 93 | 03 |
| वासश्चित्रं | 0 | 77 | 80 | 78 | **0** | 0 | 81 | 80 | 82 | 0 | 8? |
| विद्युत्वन्तं | 64 | 66 | 68 | **68** | **64** | 64 | 68 | 68 | 68 | 64 | 68 |
| विश्रान्तस्सन् | 26 | 26 | 27 | 27 | **26** | 26 | 28 | 27 | 28 | 26 | 28 |
| वीचिक्षोभ॰ | 28 | 28 | 29 | 29 | **28** | 28 | 30 | 29 | 30 | 28 | 30 |
| वेणीभूत॰ | 29 | 29 | 30 | 30 | **29** | 29 | 31 | 30 | 31 | 29 | 31 |
| शब्दाख्येयं | 99 | 08 | 09 | 09 | **99** | 99 | .10 | .09 | .09 | 00 | 10 |
| शब्दायन्ते | 56 | 58 | 60 | 60 | **56** | 56 | 60 | 60 | 60 | 56 | 60 |
| शापान्तो मे | 06 | 15 | 16 | 17 | **06** | .06 | .18 | .16 | .17 | 07 | 18 |

| Śloka | Dakṣiṇāvartanātha | Jinasena | Mallinātha | Mahimasiṁhagaṇi | **Parameśvara** | Pūrṇasarasvatī | Sāroddhāraṇī | Sarasvatītīrtha | Sumativijaya | Vallabhadeva | Viśvanātha |
|---|---|---|---|---|---|---|---|---|---|---|---|
| शेषान् मासान् | 83 | 92 | 93 | 95 | **83** | 83 | 94 | 93 | 94 | 84 | 94 |
| श्रुत्वा वार्तां | 0 | 0 | 0 | 25 | **0** | 0 | .25 | .23 | .24 | 0 | .26 |
| श्यामास्वङ्गं | .00 | 109 | 10 | 10 | **00** | 100 | .11 | 10 | .10 | .01 | .11 |
| संक्षिप्येत | .04 | 112 | 14 | 16 | **04** | 104 | 16 | .14 | .16 | .05 | .15 |
| सन्तप्तानां | 7 | 7 | 7 | 7 | **7** | 7 | 7 | ... | 7 | 7 | 7 |
| सव्यापारां | 84 | 93 | 94 | 96 | **84** | 84 | .00 | 94 | 95 | 86 | 95 |
| सा संन्यस्ताभरणं | 89 | 98 | 99 | 99 | **89** | 89 | .01 | .00 | .00 | 91 | .01 |
| स्थित्वा तस्मिन् | 19 | 19 | 19 | 19 | **19** | 19 | 20 | 19 | 20 | 19 | 20 |
| हस्ते लीलाकमलं | 65 | 71 | 69 | 72 | **65** | 65 | 74 | 69 | 70 | 65 | 70 |
| हारांस्तारान् | 0 | 33 | 33 | 32 | 0 | 0 | 34 | 36 | 53 | 0 | 34 |
| हित्वा तस्मिन् | 60 | 62 | 64 | 64 | **60** | 60 | 64 | 64 | 65 | 60 | 64 |
| हित्वा हालां | 49 | 51 | 53 | 53 | **49** | 49 | 53 | 53 | 53 | 49 | 53 |
| हेमाम्भोजप्रसवि | 62 | 64 | 66 | 66 | **62** | 62 | 66 | 66 | 66 | 62 | 66 |